श्रीः

# श्रीमन्महाराज संस्कृत महापाठशाला पत्रिका

(त्रैमासिकी)



सम्पुटम् ७] अक्टोबर् १९३१ [सञ्चिका ४

सम्पादकः

एच्. योगनरसिंहार्यः, एम्. ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः.




मैसूरु

राजकीय शाखामुद्रालये सम्मुद्रिता

१९३१

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

| सख्या | विषय –प्रवन्ध | पुटसंख्या |
|---|---|---|
| १ | [illegible] गः (अनुवृत्त.) महालक्ष्मी-<br>[illegible]व्याख्यया नवटीकया सवलित —<br>महाविद्वांस करूर शेषाचार्या. | १ |
| २ | कुवलयानन्दपाठसंशोधनम् IV—<br>महाविद्वांसः क गोपालकृष्णशास्त्रिणः | ९ |
| ३ | अधिवनसंवाद. (अथवा नाध्यायमीमांसा)—<br>विद्वांस. शिवसुब्रह्मण्यशास्त्रिण | १७ |
| ४ | अङ्गत्वनिरुक्तिः—कारकत्वविचार.—<br>विद्वास आरडिकुप्पं सुब्रह्मण्यशास्त्रिणः | २६ |
| ५ | अमिलियागलेत्तिरितिनाटकम् (लेसिङ्गनामकजर्मन् महाकवि विरचितम्)—<br>अर्थशास्त्रविशारदाः महामहोपाध्यायाः<br>आर्. शामशास्त्रिणः, बि ए , पिएच् डि | ३८ |
| ६ | वेदार्थसंग्रहप्रमेयसंग्रहः—<br>पण्डितरत्न महामहोपाध्यायाः लक्ष्मीपुरं श्रीनिवासाचार्या. | ५५ |
| ७ | पत्रिकाविषयः (स्वविषय. )—<br>सम्पादकः | ६२ |

———

## सम्पादकीयसमितिः

१. श्रीमन्तः वि सुब्रह्मण्यार्याः, बि.ए, विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर आर शामशास्त्रिणः बि. ए., पिएच्.डि., एं.आर्. ए एस , विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर डि. श्रीनिवासाचार्याः, एं.ए, मैसूरु महाराजाकालेज संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः महाविद्वांसः ब्र श्री काशी शेषवेंकटाचलशास्त्रिणः

५ महामहोपाध्यायाः पण्डितरत्नं ब्र श्री लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायाः

६ महामहोपाध्याया विद्यानिधयः धर्माधिकारिणः ब्र. श्री. विरूपाक्षशास्त्रिणः महापाठशालायामद्वैतवेदान्तप्रधानोपाध्यायाः

७. महाविद्वांसः ब्र क. गोपालकृष्णशास्त्रिणः, महापाठशालासाहित्यप्रधानोपाध्यायाः

८. महाविद्वांसः करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

९. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए महापाठशालाध्यक्षाः (सम्पादकाश्च)

# विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः-संस्कृतविद्याभिमानिनः पुरुषप्रवराः य कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्या तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

# मूल्यप्रकारः

१ अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम् (भारतमण्डले)
२. विद्यार्थिनां पुनः एकरूप्यकम् प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः, एम्.ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

# मञ्जु-भाषिणी ।

---

इयमेकैव जगति संस्कृतभाषामयी साप्ताहिकी वृत्तान्तपत्रिका । संस्कृत-भाषा-ग्रन्थ प्रकाशकाना अनुत्तम विज्ञापनसाधनम् । **सर्वदेशेषु प्रचलति ॥**

**भारत ब्रह्मदेश लङ्का वासिभिर्देयं वार्षिकं मूल्यम्—३-०-०**
**अन्यदेशीयैर्देयम्मूल्यं** ६ षिलिंग्स ॥

**मेनेजर—मञ्जुभाषिणी.**
CONJEEVERAM, (Madras)

॥ श्री ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रयं प्रकटीक्रियमाणा.

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः "

(ईशोपनिषत्)

सम्पुटम् ७] जनवरि १९३१ [मञ्जिका १

वन्देऽहं वन्दनीयानां वन्द्या वाचामधीश्वरीम् ।
कामिताशेषकल्याणकल्पनाकल्पवल्लिकाम् ॥

यद्वीक्षाञ्चलकल्पिता हरिहरब्रह्मादयो निर्जरा
यस्यैक्यं समुपासते च कतिचित्तत्वं महायोगिन ।
विश्वाकारतया चिराय समभूदेशोऽपि यस्यत्विषा
तच्छम्भोरनपायधाम किमपि प्रस्तोतुमीशे हृदि ॥

चिदाकाराय शुद्धाय सर्वविद्याविधायिने ।
योगानन्दयतीन्द्राय सान्द्राय गुरवे नम ॥

(नञ्जराजयशोभूषणे)

# कुट्टाकारशिरोमणिः

उद्देशक —

खार्थेषवो(५५०) हता' केन
युता दशभिराहृता ।
खवेदपुष्करैः (२४०) शुद्धाः
शीघ्र गुणफले वद ॥ १५

अत्रागतो गुण प्रकृति (२१) सख्य । फल कृताग्नि (३४) सख्यम् । अथानयोः क्रमादिष्टगुणापवर्तितौ हरभाज्यौ क्षिप्त्वा गुणफलसहस्रमानयेत् । अथात्र क्षेपमृणं कल्पयित्वोऽदाह्रियते ।

उद्देशक' —

खार्थेषवो हता केन
हीना दशभिराहृता. ।
खवेदपुष्करै शुद्धा'
शीघ्र गुणफले वद ॥ इति । १६

अत्रागतो गुणो रामभू(१३)सख्य' ! फल प्रकृतिसंख्यम् । अथानयो क्रमादिष्टगुणापवर्तितौ हरभाज्यौ दत्वा गुणफलसहस्रमानयेत् । अथात्र त्रैराशिकमार्ग. प्रदर्श्यते । उद्देशक —

खार्थेषवो हता केन
हीनाः पञ्चाशता हृता' ।
खवेदपुष्करै शुद्धाः
शीघ्रं गुणफले वद ॥ १७

अत्रापवर्तको दशकसङ्ख्यः । अनेनापवर्तितो भाज्यराशिः पञ्चपञ्चाशत्सख्य । भाजकश्चतुर्विंशत्सङ्ख्य. । ऋणक्षेप पञ्चसङ्ख्यः । एभिरधिकाग्रभागहारमित्येवमादिनाऽऽनीतोगुण एकत्रिंशत्सङ्ख्यः । फलं पञ्चाशत्सङ्ख्यम् । एते गुणफले त्रैराशिकेनापि सिद्ध्यतः ।

तद्यथा—

"खार्थेषवो हताः केन
हीना दशभिराहृता ।
खवेदपुष्करैः शुद्धा·"

इत्यत्रोदाहरणेऽनन्तरोक्तोदाहरणे चापवर्त्य दृढीकृतौ हरभाज्यौ क्षेपौ तु क्रमादनयोरूप (१) भूत (५) सङ्ख्यौ। अत्रोदाहरणद्वयेऽपि दृढयोर्हरभाज्ययोर्वैषम्याभावात् त्रैराशिकमवतरति ; यदि रूप (१) सङ्ख्येनदृढेन क्षयक्षेपेण कियतीत्येव त्रैराशिकेन लब्धो गुण पञ्चषष्ठिसङ्ख्यः। फल पञ्चोत्तरशतसङ्ख्यम्। एतयो क्रमाद्दृढाभ्या चतुस्त्रिंशत् पञ्चपञ्चाशत्सङ्ख्याभ्यां विभक्तयोः शिष्टे गुणफले, एकत्रिंशत्पञ्चपञ्चाशत्सङ्ख्ये एवमत्र त्रैराशिकेनानीतयोर्गुणफलयोरधिकाग्रादिसूत्रानीतयोश्च वैषम्य नास्ति। एव धनक्षेपेऽनपवर्तनविषये च त्रैराशिकसरणिरुन्नेया। अत्रेदमनुसन्धेयम्। अय त्रैराशिकमार्गो भाज्ये भागहारादूनेऽधिके वाऽपवर्तनविषयेऽनपवर्तनविषये वा सर्वदा समान इति। एव निरग्रविषये तावदिदमधिकाग्रादिसूत्रयुग प्रतिपत्तॄणा बुद्धिक्षोभो माभूदित्येकयैव रीत्या व्याकृतम्। किञ्चिद्विकल्प्य व्याख्यायते। पूर्व यत्रोदाहरणे भाज्यो भागहारादूनसङ्ख्य, तत्र "शेषपरस्परभक्त मतिगुणमग्रान्तरे क्षिप्त" मित्यत्र फलपङ्क्त्या समाया सत्या मति कल्प्या। मतिगुणितोपरिराशिरुद्दिष्टक्षेपेण च यथास्वसंस्कृतस्वाधाराशिना विभजनीय इत्युक्तम्। इदानीं तत्फलपङ्क्त्यां विषमाया मति कल्पनीया। मतिगुणितोऽल्पो राशिरुद्दिष्टेन क्षेपेणापि वाम स्वसंस्कृतस्वोपारिराशिना विभजनीय इत्युच्यते। यत्र चोदाहरणे भाजको भागहारादधिक तत्र फलपङ्क्त्या विषमायां मतिः कल्पयितव्या। मतिनिहतोऽल्पोऽपरिराशि-

रुद्दिष्टेन क्षेपेण च यथास्वसंस्कृतस्वाधोराशिना विभाज्य इति पूर्व-मुक्तम्। इदानीं त्वत्र फलपङ्क्तौ समाया मतिः कल्प्या। मतिगुणितोऽल्पोऽधोराशिरुद्दिष्टेन क्षेपेण च वाम संस्कृतस्वोर्ध्वराशिना हरणीय इत्युच्यते। अन्यत्सर्वं पूर्ववत्। एवं कृतेपि पूर्वप्रदर्शितमखिलमुदाहरणजातं प्रायशः सिध्यत्येव। एवमधिकाग्रादिसूत्रद्वयं निरग्रमधिकृत्य समासतो व्याख्यातम्। अथ संश्लिष्टकुट्टाकारास्त्रयः। तेषु यत्रैको भागहारस्तदग्राणि च भिन्नरूपाणि भिन्नरूपा भाज्याश्चोद्दिश्यन्ते स प्रथमः। अत्रोद्देशकः —

रुद्रा विश्वे सायकाः शैलवेदाः
केनाभ्यस्ता वर्जितास्ते क्रमेण।
रूपैरीशैः सप्तभिः शीतभासा
धृत्या भक्ताः शुद्धिमाप्ता वदेस्तम्॥ इति १८

अत्र पूर्ववदानीतो गुणः पञ्चसङ्ख्यः। अथ यत्रैको भाज्यो भिन्नरूपा भागहारास्तदग्राणि च तादृशान्युद्दिश्यन्ते स द्वितीयः।

अत्रोद्देशकः —

केनाभ्यस्ता रामबाणाश्चतुर्धा
वेदैरर्कैर्वासवैरक्षिदिग्भिः।
हीना भूपैः खार्णवैः षट्कतर्कैः
खेशैर्भक्ताः शुद्धिमाप्ता गुणः कः॥ १९

अत्र पूर्ववदानीतो गुणो वेदसङ्ख्यः। अथ यत्र भाज्या भागहाराश्च भिन्नात्मकास्तादृशानि तदग्राणि चोद्दिश्यन्ते स तृतीयः।

अत्रोद्देशकः—

चन्द्रामराः शरशिवा मुनिराममूर्याः
केनाहताः शिखिसुरैर्नवभिस्त्रिवेदैः।

हीना रसाग्निमनुभीरविभिर्गजेशै
शुद्धा क्रमेण वद त गुणमाशु विद्वन् ॥ २०

अत्रत्यो गुणस्तूत्तरत्र प्रदर्शयिष्यते । एषु प्रथमद्विर्तीययो मश्लिष्ट-कुट्टाकारयोरेकस्य योऽधिकाग्रादि सूत्रलब्धो गुण स सर्वेषा समान इति । न तयो किञ्चिदपि वक्तव्यमस्ति । अतस्तौ विहाय । तृतीयविषय आर्ययाह—

भिन्नहरभाज्यकुट्टे सर्वेषा पूर्ववद्गुणा साध्या. ।
भाज्योऽल्पगुणहर स्याद्धारोऽन्यहरो गुणान्तरमृणाग्रम ॥ ३
तज्जगुणभाज्यघात साल्पगुण स्फुटगुणोऽस्य हरघात ।
हर इह ताभ्या परगुणहाराभ्यां गुणक उक्तवत्साध्य ॥ ४

अनयोरर्थस्तूदाहरणमुखेन व्यक्तीभविष्यति । अत्रत्य प्रश्नश्लोक पूर्वमेव लिखित । एतच्छ्लोके त्रयो भाज्या । तेषा क्रमाद्धारहाराश्च त्रय ऋणरूपाण्यग्राणि च क्रमेण त्रीणि । एषु प्रथमो भाज्य-श्चन्द्रामर (३३१) सङ्ख्य । अस्य छेदोरसाग्निमनु (१४३६) सङ्ख्य । अत्र ऋणाग्र शिखिमुर (३३३) सङ्ख्यम् । एभि पूर्ववदानीत प्रथमो गुण त्र्यष्टाक्षि (२८३) सङ्ख्य । अथ द्वितीयो भाज्य शरशिव (११५) सङ्ख्य । अस्य छेदो रवि (१२) सङ्ख्य । एभि पूर्ववदानीतो गुणस्त्रिसङ्ख्य । अथ तृतीयो भाज्यो मुनिराममूर्य (१२३७) सङ्ख्य । अस्य हारो गजेश (११८) सङ्ख्य । इह ऋणाग्र त्रिवेद (४३) सङ्ख्यम् । अथ प्रथमद्वितीययोर्भाज्यराश्यो. साधारणो गुण आनीयते । प्रथमगुणस्त्र्यष्टाक्षि (२८३) सङ्ख्य । द्वितीयगुणस्त्रिसङ्ख्य । अत्र द्वितीय-गुणस्याऽल्पत्वाद्भाज्येऽल्पगुणहरत्व स्यादित्यल्पगुण उत्पाद्यमाने यश्छेद स भाज्यो भवेदिति । द्वितीयगुण उत्पाद्यमाने यश्छेद सोऽत्र भाज्यो भवेत् स च रविसङ्ख्य. । ' हारोऽन्यहर '' इत्यधिकगुण

उत्पाद्यमाने यश्छेद स भाजको भवेदित्यत्राधिके प्रथमगुण उत्पाद्यमाने यश्छेद स भाजको भवेत् । स च रसाग्निमनु (१४३६)सख्य । "गुणान्तरमृणाग्र" मिति प्रथमद्वितीययोर्गुणयोर्विवरमृणक्षेपो भवेत् । स च खाष्टाक्षि(२८०)सख्य । एवमागतैर्भाज्यभाजकक्षेपैर्निरग्रकुट्टाकारप्रक्रियया यो गुण उत्पादितो भवति स तज्जगुण । स चात्र त्रिमनुसख्य । तस्य पूर्वप्रदर्शितभाज्यस्य च रवि(१२)सख्यस्य सवर्गो नृपात्यष्टि(१७१६)सख्यः । एषोऽत्र तज्जगुणभाज्यघात असौ 'साल्पगुण' इत्यनेन त्रिसख्येनाल्पेन गुणेन युक्त छिद्ररूपमुनीन्दु(१७१९)सख्य । एष प्रथमद्वितीययोर्भाज्यराश्यो साधारणो गुण । अयमेवात्र स्फुटगुण उच्यते । अथ तृतीयभाज्यस्य पूर्वभाज्ययोश्चानन्तरोक्तप्रकारेण साधारणगुणे साध्ये स्फुटगुण एव गुणः । अस्य 'हर' इति स्फुटगुणस्य प्रथमश्छेदयो सवर्गश्छेदोभवेदित्यत्र प्रथमश्छेदस्य रविसख्यस्य च घातो रदद्यत्यष्टि(१७२३२)सख्य । असौ छेद । अथाभ्या गुणश्छेदाभ्यां च इह ताभ्यां परगुणहाराभ्यां गुणक उक्तवत्साध्य, इति त्रयाणां भाज्यानां साधारणो गुण साध्यते । अथ स्फुटगुणात् तृतीयो गुणोऽल्प । अतोत्र गजेश(११८)सख्य । तृतीयश्छेदो भाज्य । स्फुटगुणस्य रदाद्र्यत्यष्टि (१७२३२) सख्यश्छेदो भाजक । स्फुटगुणस्य छिद्ररूप मुनीन्दु(१७१९)सख्यस्य । सप्तरस(६७)सख्यस्य तृतीयगुणस्य च विशेषो द्व्यर्थनृप(१६५२)सख्य । एष. क्षय क्षेप । एभिर्भाज्यभाजकक्षयक्षेपैर्निरग्रकप्रकारेणानीतस्तज्जगुण शक्र १४)सख्य । अस्य च गजेशसख्यस्य भाजकस्य च वधो द्व्यर्थाष्टि-(१६५२)सख्य. । अयमत्राल्पेन सप्तरस(६७)सख्येन तृतीयगुणेन युत. पूर्ववत् छिद्ररूपमुनीन्दु(१७१९)सख्य । अयमत्र स्फुटगुण

अयमेवात्र त्रयाणां भाज्यराशीनां साधारणो गुण । एवमेवंविध-प्रश्नेषु गुणा साध्या । अथ पूर्वोक्तनिरग्रन्यायेन चतुर्युगसम्बन्धिनोऽ-धिमासावमदिवसग्रहभगणादीन् भाज्यराशीन् कल्पयित्वा चतुर्युग-सम्बन्धिन सूर्यमासचान्द्रवासरभूमिसावनदिवसादीन् भागहाराश्च परि-कल्प्याऽधिकावमभागादिशेषानपि क्षयक्षेपान् परिकल्प्य तत्र कुट्टा-कारफलमन्यान् कांश्चन विशेषानपि दर्शयिष्यन्नादावधिमासशेषाव) लम्बनेन प्रश्नत्रयमार्यया प्रकटयति ।

अधिकाग्रानधिमासान् रविमासान् दिनगणांश्च यो ब्रूते ।
सलिलनिधिमेखलाया स भवति सांवत्सराग्रणीर्भूमौ ॥ ५

स्पष्टार्थेऽयमार्या । अथैतत्प्रस्तुतप्रश्नत्रयभङ्गार्थमार्यात्रयमाह —

सिद्धहृतमधिकशेषं द्वेधा विन्यस्य खाद्रिषट्कनखै ।
नवखेषु द्व्यद्रिरसैर्हत्वा नन्दाष्टवह्नितर्करसै ॥ ६

खचतुष्काङ्ककुपक्षै
क्रमेण विभजेत्फले पृथग्भवत ।
शेषे गताधिमासा
रविमासाश्च क्रमादिह भवन्ति॥ ७

तद्योग युगदिवसैर्हत्वा
विभजेत शीतकरमासै ।
लब्ध फल सरूप
शेषे सति तद्भवेद्दिवसवृन्दम् ॥ ८

चतुर्विंशतिभक्तमुद्दिष्टमधिकमासशेषमुपर्यधोभावेन द्विधा स्थापयित्वा तदुपर्यधोराशी खाद्रिषट्कनखै (२०६७०) नवखेषुद्व्यद्रिरसैश्च (६७२५०९) क्रमाद्धत्वा नन्दाष्टवह्नितर्करसै (६६३८९) खचतु-ष्काङ्ककुपक्षैश्च (२१६००००) सति सम्भवे क्रमेण विभजेत् । अत्र

लब्धाभ्या प्रयोजन नास्ति। इह शेषौ क्रमाद्गताधिमासा गतरविमासाश्च भवन्ति। अत्र गताधिमासवृन्द फले सति रविमासचय कुट्टाकाराख्यो गुण। अथ गताधिमासगतरविमासयोग वसुद्व्यष्टाद्रिरूपाङ्कसप्ताद्रितिथि (१५७७९१७८२८) सख्यैश्चतुर्युगदिनैर्हत्वा रसाग्निगुणरामाग्निवेदपुष्करसायकै (५२४३३३३६) चतुर्युगचन्द्रमासैर्विभजेत्। अत्र फल लब्ध फल चान्द्रमासशेषे विद्यमाने तस्य भागहारार्धादूनाधिकमनपेक्ष्य सर्वदा रूपयुक्त कार्यम्। तद्दर्शान्तावधिकाना चान्द्राणा मासानामनुपातासिद्ध सावनादिनसमूह स्यात्। उद्देशक.—

सूर्याद्रिनन्दविधुराममहीध्रसंख्यो
दृष्टो मयात्र मतिमन्नधिमासशेष।
अस्मादिमानधिकमासचयान्विवस्व
न्मासांश्च तद्युतिभवानि वदेरहानि॥ २१

अत्राधिकमासशेषोऽयम् (७३१९७१२)। अय सिद्ध (२४) हृत सर्पाष्टतानवेदाग्नि (३०४९८८) सख्य। अयमुपर्यधोभावेन (३०४९८८—३०४९८८) द्विधा विन्यस्तः। अत्रोपरिराशि. खाद्रिषट्कनखै (२०६७०) गुणित खरसातिधृतिदिक्कृतखाग्निषट् (६३०४१०१९६०) संख्य। अस्मिन् नन्दाष्टवह्नितर्करसै· (६६३८९) विभक्त शेष· सप्ताष्टाष्टि (१६८७) सख्य·। अयं गताधिमासचय। अथाधोराशि· नवखेषुद्व्यद्रिरसै· (६७२५०९) गुणित पक्षाङ्काष्टाब्धिमुनिभूगिरिदिगिषुनख (२०५१०७१७४८९२) सख्य। अस्मिन् खचतुष्काङ्गकुपक्षै· (२१६००००) विभक्त शेषो द्व्यङ्काष्टाब्धीषु (५४८९२) संख्यः। अय गतरविमासनिवह॥

# कुवलयानन्दपाठसंशोधनम्

IV

१ उपमेयोपमालङ्कारे 'खमिव जलं जलमिव खं हंसश्चन्द्रइव हंसइव चन्द्रः। कुमुदाकारास्तारास्ताराकाराणि कुमुदानि' इति पद्यमुदाहृतम्। इदञ्च पद्यं व्यक्तिविवेक—अलङ्कारसर्वस्व—चित्रमीमांसा—काव्यालङ्कारसूत्रादिषु बहुषु ग्रन्थेषूपलभ्यते। एतच्चावन्तिवर्मणः सम्बन्धीत्यभिज्ञा बभाषिरे। अस्मिंश्च श्लोके बहवः पाठभेदा निरीक्ष्यन्ते। कुवलयानन्दे, चित्रमीमांसायाञ्च हंसश्चन्द्रइव हंसइव चन्द्रः' इति। वामनकृतकाव्यालङ्कारसूत्रवृत्तौ तु 'हंसइव शशी शशीव हंसोऽयं' इति राजानकमहिमभट्टकृतव्यक्तिविवेके तु हंस इव शशी शशीव कलहंसः' इति त्रेधाभिन्नेषु पाठेषु कः पशस्य इतीदं चिन्त्यते। उपमेयोपमा नाम पूर्ववाक्योक्तसाधारणधर्ममेव साधारणधर्मीकृत्य पूर्ववाक्योक्तेन उपमेयेन पूर्ववाक्योक्तस्य उपमानस्य उपमा अतएव उपमेयेन उपमा यत्रेति योगं निर्ब्रुवन्ति। आशाधरभट्टस्तु उपमेयाभ्यां उपमेति योगं निर्वक्ति। सर्वेष्वपि पाठभेदेषु पूर्वोक्तलक्षणं सुशकमपि 'हंसइव शशी शशीव हंसोऽयम्' इति वामनाचार्यपाठएव श्रेयानिति प्राज्ञाः प्रतियन्ति। तथाहि — उपमाप्रायपाठवत्सु एषु प्रभेदेषु चन्द्रइवमुखमित्यादिवाक्यवत् इवघटितस्योपमानवाचकपदस्य प्राथमिकत्वं सर्वत्र संलक्ष्यते यथा 'गिरिरिव गजराजोऽयं निर्झर इव मदधारा' 'कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः'। (काव्यप्रकाशिकायाम्) 'वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः' (अलङ्कारसर्वस्वे)

'विद्रुम इव त्वदधरस्त्वदधर इव विद्रुम शोण ' (अलङ्कारकौस्तुभे) इति । हसश्चन्द्रइव हसइवचन्द्र इति मुद्रितकोशपाठे तु इवघटितस्योपमानवाचकपदस्य पश्चिमत्वेन प्रायपाठवैगुण्य सम्पतेत् 'खमिवेत्युपक्रमे कुमुदाकारास्तारा इत्युपसहारे च येन क्रमेणोपमानोपमेयवाचकपदयोर्निर्देशस्तेनैव क्रमेण मध्यवर्तिवाक्येपि तत्क्रमस्यावश्यानुसरणीयत्वस्यौचित्यम् । न च चन्द्रइवमुखमित्यादिवाक्यवत् मुख चन्द्रइवेत्यादि व्यवहारोऽपि दरीदृश्यते अतएव वल्लीरिव वामनयना विभाति वल्ली च वामनयनेव' इत्यादिवाक्यानि हसश्चन्द्र इव हस इव चन्द्रः' इति वाक्यवत् तत्र तत्र दृश्यन्त इति वाच्यम् 'कमलेव मतिर्मतिरिव कमले'त्यादि काव्यप्रकशालङ्कारसर्वस्वादिषु उपमानवाचकपदस्य पौरस्त्यप्रतिपादकलक्ष्यभूयिष्ठत्वस्य समाकलनात् हम इव शशी शशीव हसोऽयम् इति वामनाचार्यप्रदर्शितपाठस्यैव साधीयस्त्व युज्यते । व्यक्तिविवेकेपि सन्दर्शितपाठस्यैवोपलब्धि । चित्रमीमासायामुपमालङ्कारप्रकरणे दीक्षितैरपि 'चन्द्रइव मुख मुखमिव चन्द्र.' इत्युपमेयोपमा इत्यभिहित नतु मुख चन्द्र इवेत्यादिरीत्येति 'हस इव शशी शशीव हसोऽयम्' इत्येवपाठ समादर्तव्य ॥

२. त्वदङ्गमार्दवे दृष्टे कस्य चित्त न भासते । मालतीशशभृल्लेखाकदळीनां कठोरता' ॥ इति पद्य पर्यग्राहि दीक्षितैः कुवलयानन्दे । किर्मीयमिद पद्य स्यादित्याकरग्रन्थान्वेषणदशाया साहित्यदर्पणे दीक्षितेभ्य' प्राचीनेन विश्वनाथेन तुल्ययोगितालङ्कारे (सा पु ५४२) उदाहरणतया म्यकारि। कुवलयानन्दपाठापेक्षया तदीय' पाठ किञ्चिद्भिद्यते तथाहि—'त्वदङ्गमार्दवं द्रष्टु' कस्य चित्ते न भासते' इति । अत्र मालत्यादीनामप्रस्तुतानां कठोरतारूप एकगुणसम्बन्ध इति लक्ष्यसमन्वयश्च व्यरचि ॥

अनयो: पाठयोर्मध्ये कतरो ज्यायानिति परिशीलने साहित्य-दर्पणस्थ एव स्वरस इति भाति । उभयविधपाठे यद्यपि प्रकृततुल्ययोगितालङ्कारसमन्वय साम्प्रतम् । तथापि नायिकाङ्गसौकुमार्यदर्शन-मालतीशशभृल्लेखाकदळीकठोरताभानयोर्हेतुहेतुमद्भावे सामानाधिकरण्य स्वरसतः प्रतीतश्चेत्सहृदयानाममन्दानन्दनिष्यन्द उदेति । 'त्वदङ्गमार्दवे दृष्टे' इति पाठे तु क्लेशेन तत्सम्पादनीयम् । नचात्र तयोर्हेतुहेतुमद्भावविवक्षैव नास्तीति वाच्यम् । उत्तरत्र दीक्षितैरप्रस्तुतप्रशंसालङ्कारे 'अस्याश्चेद्गतिसौकुमार्यमधुने' तिश्लोकविवरणावसरे 'अङ्गानामकठोरते' नितृतीयपादे वर्णनीयासौकुमार्यातिशयनिरीक्षणकार्यत्वमपि नार्थाक्षेप्यमालतीकठोरत्वे विवक्षितम् प्रतियोगिविशेषापेक्षकठोरस्य तदकार्यत्वे किन्तु तद्बुद्धेरेव । इदमपि त्वदङ्गमार्दवे दृष्ट इत्युदाहरणान्तरे स्पष्टम् । इदमपीत्यस्य चन्द्रिकायां विवरणम् इदमपि—अप्रस्तुतबुद्धे कारणत्व प्रागुक्त समुच्चीयत इत्यादि ॥

त्वदङ्गमार्दव इतिश्लोके हेतुहेतुमद्भावस्य सामानाधिकरण्ये वा वैयधिकरण्ये वा तुल्ययोगितालङ्कारसमन्वयस्य निराबाधत्वेन त्वदङ्गमार्दव द्रष्टुरिति पाठ किमर्थ समाश्रयणीय इति चेन्न 'राजानकमम्मटभट्ट—रूय्यक—आनन्दवर्धनाचार्येभ्य प्राचीनेन प्रतीहारेन्दुराजेन स्वकृतोद्भटाचार्यप्रणीतकाव्यालङ्कारसूत्रलघुवृत्तौ (पुट ६०) त्वदङ्गमार्दव द्रष्टु कस्येति पद्य तुल्ययोगितालङ्कारे समुदाहारि । एतद्ग्रन्थपरिशीलनेनैन प्रतीहारेन्दुराज वामनाचार्यादर्वाचीन आनन्दवर्धनाचार्यादिभ्य प्राक्तन निरणैषम् । सोपि प्रतीहारेन्दुराज स्वीयलघुवृत्तौ (७० पुटे) इत्थ विववार 'त्वच्छरीरसौकुमार्यदर्शिन कस्य वा चेतसि मालत्यादीना काठिन्य न भासत इत्यर्थ । अत्र मालत्यादीनामप्राकरणिकानामेवार्थानां कठोरत्वलक्षण साम्यमुपनिबद्ध, द्रष्टुरिति तृन्प्रत्यय.

तद्योगे च त्वदङ्गमार्दवमिति 'नलोकाव्ययनिष्ठेति षष्ठीनिषेध इत्यादि ॥

अमुना प्राचीनग्रन्थपरिशीलनेन 'त्वदङ्गमार्दव द्रष्टुः कस्य चित्ते न भासते इत्यादि पाठो युक्त इति समेषा परिशीलयितृणा स्वान्ते स्वारस्य समुन्मिषति । साहित्यदर्पणे तु 'त्वदङ्गमार्दव द्रष्टु ' इति पाठ उपलभ्यते ॥

३ वत्से मागा विषाद श्वसनमुरुजव सन्त्यधोर्ध्वप्रवृत्त कम्प को वा गुरुस्ते किमिह बलभिदा जृम्भितेनात्र याहि । प्रत्याख्यान सुरगणामिति भयशमनच्छद्मना कारयित्वा यस्मै लक्ष्मीमदाद्व स दहतु दुरितं मन्थमुग्ध पयोधि इत्यत्र ध्वन्यालोके द्वितीयोद्योते शब्दार्थ-शक्त्याऽऽक्षिप्तोऽपि व्यङ्ग्योऽर्थ कविना पुन । यत्राविष्क्रियते स्वोक्त्या साऽन्यैवालङ्कृतिर्ध्वने ' इति कारिका विलिख्य शब्दशक्त्य परवञ्चनाय गुप्ताविष्करणस्य उदाहरणत्वेन प्रादायि । तदनुसृत्यैव दीक्षितै विवृतोक्त्यलङ्कारस्योदाहरण दत्तम् ॥

ध्वन्यालोकेऽस्य श्लोकस्य तुर्य पादाश 'दहतु दुरित मन्था-मूढा पयोधि ' इत्येव वर्तते । कुवलयानन्दे तु मन्थमूढ पयोधि ' इति पाठ सलक्ष्यते। अत्र मन्थमूढत्वविशेषणं लक्ष्म्या युक्तम् ? उताहो पयोधाविति तावद्विवेक्तव्यम्—मन्थनजन्यमोहवैशिष्ट्यमुभयत्रापि सम्भ-वितुं साम्प्रतम् । तत्र स्वसमभिव्याहृतपयोधिपदेन साक सन्निधे. सत्वात् तत्रैवान्वितु युक्तमिति केषाञ्चित्तात्पर्यम् । शाब्दबोधकारिणी-भूतयोग्यताबलात्तु लक्ष्म्या सम्बद्धमुचितमिति प्रतीयते । तथाहि आक-स्मिकसरस्वदुन्मथनसञ्जातविक्षोभकलुषितशेमुषीका लक्ष्मी भयभ्रान्ता सती महेश्वर महेन्द्र यङ्कञ्चन वा सुमनस मनसा भावयेदिति पूर्वोक्त-महेश्वर-मातरिश्व-ज्वलन-वरुण-महेन्द्रेषु विषभोक्तृत्व-ऊर्ध्वश्वासवत्त्व-कम्प-

नत्व गुरुत्व-बलनाशकत्वादिदोषान् प्रख्याप्य स्वाभीष्टाय पुण्डरीकाक्षा-यात्मजा प्रादादित्यर्थपर्यालोचनया भयशमनछद्मनेति पदस्वारस्याच्च लक्ष्म्यामेव समुद्रमथनेन भयकम्पमोहादय आसान्निति स्वरसत सम्भाव्यत इति तत्र विशेषण वितरीतु युक्तमिति मन्थमूढा पयोधि ' इति पाठ साधीयानिति सहृदया मन्यन्ते ॥

यद्यप्यत्र स दहतु दुरित मन्थमूढा पयोधिरिति वाक्यस्थमन्थ-मूढामित्यस्य यस्मै लक्ष्मीमदादिति वाक्यघटकलक्ष्मीमित्यनेन साकम-न्वयवर्णने वाक्यान्तरघटकपदव्यवहितपदघटितत्वरूपसङ्कीर्णदोष प्रस-ज्येतेति कस्याचित्स्वान्ते प्रतिभायात् तथापि ध्वन्यालोकव्याख्याकृता-मभिनवगुप्तपादाचार्याणा व्याख्यापरिपाटीमाटीकमानाना मनीषिणा मनसि संशयलेशोपि न शेते । तथाहि ध्वन्यालोके (१ ५) पृष्ठे स्वभावसुकुमारतया मन्दरान्दोलितजलधितरङ्गभङ्गपर्याकुलीकृता तेन प्रबोधिता अन्यत्र दोषोद्घाटनेन' अत्र याहीत्यभिनवविशेषण सकल-गुणदर्शकेन कृत तत्समर्थाचरण अत एव मन्थमूढमित्याह इत्युक्त-प्रकारेण भयनिवारणव्याजेन सुराणा प्रत्याख्यान मन्थमूढा लक्ष्मी कारयित्वा पयोधिर्यस्मै प्रादादित्यादि ॥

अत्र लोचनकृद्व्याख्यास्वारस्यात् पूर्वोक्तयोग्यताबलाच्च मन्थमूढा-मिति विशेषण लक्ष्मीपदार्थेन सार्ध सम्बद्ध साम्प्रतम् । पयोधिपदार्थेन साकमन्वये व्याजेन प्रत्याख्यानकारयितृत्व मुग्धस्य दुग्धाब्धेर्न सम्बध्येत प्रत्युत महेन्द्रमहेश्वरादिदेवेभ्य प्रदातु योग्या मोहाद्धि पुण्डरीकाक्षाय व्यतारीदित्यादि विरुद्धोऽर्थ प्रतिभायात् । अत वाक्यान्तरघटक-लक्ष्मीपदार्थेनान्वयोऽभिप्रेतव्य । न च सङ्कीर्णत्वरूपदोषस्तथात्वे मज्ज एवेति वाच्यम् । सङ्कीर्णत्वस्य वाक्यदोषत्वेन तथाविधवाक्यान्तरघट-काना बहूना पदाना समवधान एव तादृशदोषवत्त्वस्य 'किमिति न

पश्यसि कोप पादगत बहुगुण गृहाणेमम् । ननु मुञ्च हृदयनाथ कण्ठे मनसस्तमोरूपम्' ॥ अत्र पादगत बहुगुण हृदयनाथ किमिति न पश्यसि. इम कण्ठ गृहाण, मनसस्तमोरूप कोप मुञ्चेति वाक्यत्रये अन्योन्यवाक्यस्थबहुपदादानपूर्वक विवक्षितान्वयस्य प्रदर्शनेन प्रतीति-विलम्बस्य दूषकताबीजस्य च मम्मटभट्टै प्रदर्शनात् योग्यताबलेन, समुचितपदार्थान्वयस्वारस्येन च वाक्यान्तरघटकस्य एकपदार्थस्य पदार्थान्तरेण भिन्नवाक्यस्थेन साकमन्वयेपि दोषाभावस्त्वस्येष्टे मन्थमुग्धां पयोधिरिति ध्वन्यालोकपाठ एव सुष्ठुभूत इति कोविदा विदाङ्कुर्वन्तु । द्वितीयपादे 'कम्प को वा गुरुस्ते भवतु' इति ध्वन्यालोकपाठापेक्षया 'गुरुस्ते किमिह बलभिदे' ति कुवलयानन्दपाठ समुचित ॥

४. हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम् । रामस्य गात्रमसि निर्भरगर्भखिन्नसीताविवासनपटो करुणा कुतस्ते ॥ इदमुत्तररामचरितीय पद्यम् विध्यलङ्कारस्य लक्ष्यतया विश्राणितम् । इदमेव पद्य व्यक्तिविवेके (४४ पृष्ठे) अविमृष्टविधेयाश-दोषप्रकरणे 'रामस्य पाणिरासी' ति पाठतया निर्दिष्टम् । अत्र रामस्य गात्रमसीति पाठ सुष्ठु उताहो रामस्य पाणिरसि' इति परिशील्यमाने द्वितीयकोटेरेव स्थाने खल्विति प्रतिभाति ॥

यद्यपि रामस्य गात्रमसीत्यत्र 'गात्र वपु· सहनन शरीर' मित्य-मरसिंहोक्ते गात्रशब्दस्य शरीरवाचकत्वात् हस्तोद्देशेन शरीरत्वविधान नातीव समञ्जसम् । तथापि गात्रशब्दस्यावयववाचकत्वं 'गात्र गजाग्र-जङ्घादिभागेप्यङ्गे कळेबरे' इति विश्वकोशवशात्, 'त्वद्गात्राणां गुण-विनिमय कल्पितो यौवनेने' ति प्रयोगाच्च प्रसिद्धमिति 'रामस्य गात्र-मसि' इति पाठेऽप्युपपत्ति. प्रदर्शयितु पार्यते । एवमपि रामस्य पाणि-रसीति पाठ एव योग्यः । तथाहि कुवलयानन्दे तावत्—

'वसन्तसमये प्राप्ते काक काक. पिक पिक ।
पञ्चमोदञ्चने काले कोकिल कोकिलो भवेत् ॥

इत्यादीन्यस्यालङ्कारस्य उदाहरणानि भवितु मर्हन्ति । इमानिच अविवक्षितवाच्यध्वन्यवान्तरभूतार्थान्तरसक्रमितवाच्यध्वनिमूलकानि । प्रकृते द्वितीय पिकशब्द वसन्तसमयसमुज्जृम्भितपञ्चमध्वन्यञ्चितत्वस्फोरक, तच्च वसन्तसमय इत्यनेनाविष्कृतमिति अलङ्कारत्वापादन युज्यत इति 'शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थ. कविना पुन । यत्राविष्क्रियते स्वोक्त्या साऽन्यैवालङ्कृतिर्ध्वने इति ध्वनिकारोक्तदिशा मूल एव सर्व समर्थितम् । ध्वन्यालोकेऽपि 'रविकिरणानुग्रहीतानि भवन्ति कमलानि कमलानि' । इत्यादौ द्वितीय कमलशब्द लक्ष्मीपात्रत्वादिरूपधर्मान्तरविशिष्ट 'रामोऽस्मि सर्व सहे' इत्यादौ रामशब्द राज्यनिर्वासनसकलदु खपात्रत्वादिधर्मान्तरस्फोरक इत्याद्युक्तम्। 'अद्य प्रभृति हे लोका यूय यूय वय वयम्' वय तु किङ्करा विष्णोर्यूयमिन्द्रियकिङ्करा । अत्र द्वितीयवयशब्दस्य विष्णुकिङ्करत्वरूपार्थान्तरम्, द्वितीययूयशब्दस्य च इन्द्रियकिङ्करत्वार्थस्फोरणञ्च सम्भाव्यते । तच्च कविनाविष्कृतमित्यलङ्कारत्वमेव ॥

'मणि लुण्ठति पादेषु काच· शिरसि धार्यते ।
यथैवास्तु तथैवास्तु काच काचो मणिर्मणि ' ॥

इत्यादौ समानार्थकद्वितीयशब्दोपादान एव सिद्धस्य विधानं सम्भवति, अर्थान्तरगर्भकरणाच्च पौनरुक्त्य निर्वारितम् । अन्यथा हस्तत्वावच्छिन्नमुद्दिश्य रामसम्बन्धिगात्रत्वविधाने बाधाभावात् अनुपयुक्तत्वमूलकार्थान्तरगर्भकरणस्यानवकाशप्रसङ्ग । हस्त विशेष्यीकृत्य रामसम्बन्धिपाणित्वविधाने निर्भरगर्भखिन्नसीताविवासनपटुत्वाद्यर्थान्तरप्रत्यायकत्व द्वितीयपाणिशब्दस्य सम्भवति । तथात्वे निर्भरगर्भखिन्नसीता-

विवासनपटोरिति रामस्य विशेषण नातीवसमञ्जसमिति चेन्न ‘रामस्य पाणिरसि निर्भरगर्भखिन्नसीताविवासनपटो· करुणा कुतस्ते’ इत्यादि पाठ प्राचीनपुस्तकेषूपलभ्यत एवेति प्रकृतहस्तस्यैव निर्वासनपटुत्व, करुणाशून्यत्व अत एव शम्बूकवधकर्तृत्वञ्च युज्यत इति पूर्वोक्त रामस्य पाणिरसी ति पाठ स्वारस्यावह· ॥

यद्यप्यय विध्यलङ्कार आक्षेपप्रभेदे वा, तदाप्रभृति निस्सङ्गी नागकुञ्जरकृत्तिभृत्। शितिकण्ठ कालगलत्सतीशोकानलव्यथ· ॥ इत्यादि-पुनरुक्तवदाभासे वाऽन्तर्भवितु नार्हति। पुतरुक्तवदाभासे नागकुञ्जर-शब्दयोरुपक्रमावस्थाया गजवाचित्वेनैकार्थत्वप्रतिभानेऽपि अन्वयपर्यालोचनया कुञ्जर शब्दस्य प्रशसावाचकत्वानुसन्धानवशात् विरोधो निवर्तते। प्राचीनचन्द्रालोके वा काव्यप्रकाशादिग्रन्थे वाऽयमलङ्कारो न लक्षित। दीक्षितै पुन शतालङ्कारपरिपूर्णार्थं प्रतिषेधवत् विधिरूप मिममलङ्कार अतिरिक्तत्वेन उररीकुर्वन्। प्राचाम्मते तु गुणीभूतव्यङ्ग्य-प्रभेदेष्वेवास्यालङ्कारस्य गतार्थता इति सूक्ष्मेक्षिकया परिशीलयन्तु इत्यलम् ॥

(अनुवर्तते)

क. गोपालकृष्णशास्त्री.

# अधिवनसंवादः

(अथवानध्यायमीमांसा)

विदधति महीं मरीचय उष्णगोर्नीरसां। विरमति स्म हिमानी सपत्नीघात वृष्ट्या हता वात्ययेव तूलराशिः। नक्तमपि प्रसरीसर्त्त्यूष्मा अनलमप्यतिशयानोमयूखमालिन। योसावीष्टेऽखण्डनयिप्रसरः सार्वभौमानामप्यनर्गल प्रवेष्टु शुद्धान्तमपि महामार्यीव जार, आयासयितु वै तद्गत जन, प्रभवति च परिणन्तुं दहनात्मना मंदमारुतकपितगहनवनशाखासघर्षव्याजात् कर्तुं च भस्मसात् वर्नी निबिडा बाधयन्विनष्टिं नियतिनिर्मितां अतिसमृद्धस्यापि कालभवाम्। अनेनैवह्यपहतसामर्थ्यो मदमेवैजाति प्रभञ्जन। गच्छन्ति तिष्ठन्त्यासते शेरते वा तालवृन्तादिजीवना एव सुखिमानिनो नक्तन्दिव, यावन्नसुषुप्त्याभिभूयन्ते वाराङ्गनयेव कामिन। आकल्पन्ति वनस्पतीन् इतरान्वा वृक्षान् वीरुध शिथिलजारितपर्णान् कमनीयानि किसलयानि सुरभीणि च कुसुमानि, परिपक्वानि पुण्यानीव रमणीयचरणान्। आश्रयन्त्यतीत्यातपतप्तां स्थली वृक्षच्छायान्यापिपीलिक सत्वानि, दारिद्र्यमुद्राद्रुह· कारुणिकानुदारानिव दैन्यभूमयो जना'। अधिमध्यमस्य वनस्यातिक्रूरसत्वसमृद्धस्यापि आभाति वर्तनी, योपतिष्ठति अतिदूरतरात् जनपदात् प्रवृत्ता महाप्रभाव श्रीमहाकालेश्वर। यस्य हि वार्षिकमेक मेवाराधन चत्वारिंशद्दिवससाध्य आमहाशिवरात्रिकालात्। यत्र सौवर्णी राजतीः मणिमयीः अन्यादृशीर्वा विचित्रान्नभक्ष्यफलादिका वा उपदाः समर्प्याभरणभाजनादिरूपा कृतार्थयन्त्यात्मान भक्ता जना'। यस्य च देवस्य केरलदेशीयवायव्यभागाश्रितस्यानुग्रहो निग्रहो वा

स तादृशः । येनाव्याजमासेवमानमतितुदन्त आमया अनुपद जहति, यानाचक्षते क्षेत्रियानिति भिषजितु प्रवृत्ता । येनैकागारिक रागिण वा स्वस्वकृत्ये प्रयतमान रमणीशतसपूर्णे बहुधानिसयुते तत्तादृशे महोत्सवे सद्यएवोन्मत्त पश्यन्ति भक्ता. । यत एवचाद्वितीयवर्षाराधनं पात्राण्याभरणानि वान्तरेणापि रक्षकान् सुरक्षितानि प्रकाशन्ते यत्र क चन प्रक्षिप्तानि । तयैतया वर्तन्या तन्त्र्यविच्छिन्नधार जना आब्राह्मणा-दाच नीचात् आस्त्रीबालवृद्ध प्रवृत्ते महोत्सवे । वैतण्डिको वटुः कोपि कौतुक दिदृक्षु सुन्दरकेण मातृपित्राचार्यैरनुशिष्टेन समगतोत्सवमेन जिगमिषुणा । प्रावर्तत च बहुचाटु भाषितु ॥

वैतण्डिकः—अङ्ग रे सुन्दरकारिक्तपार्श्वो मयेहि गन्तव्यमध्वान । अचरमः किलाह कौतुक दिदृक्षूणां । यदीदमर्थस्तेगम । अथ वा कृत सदेहेन । नखल्वन्तरेण चित्तप्रसादनात् इयदियान् महाजन आयासयेदात्मान उपवासादिना । (नितान्त श्रमापनयमभिनीय सदीर्घोष्णश्वास) हा हन्त वृकमुखादिवोरणपाक तस्य दुर्मुखस्योपा-ध्यायपदवाच्यस्य हस्तात् च्यावितोस्मि दैवेन दहनदाहहि दहति-द्वैयन्यिक त्रैयन्यिकवा विस्फुलिङ्गानिव वर्षितुं चक्षुषी विस्फारयन् तारके च घूर्णयन् भ्रुकुटीधनुर्ज्याम् । हा स्मरणमपि पाठनरीते. प्रसह्य वेपयत्यारोमकूपात् । न खलु कस्मिन्नप्यहानि प्रस्मरति वृत्तपाठसशोध-नस्य, न वान्यथयितस्य लेखनादे' बहुवारमावर्तनस्य, नैव च सक्रमविनामोपग्रहव्यत्ययिनो दुरन्वयितो भावानभिज्ञस्य वा आतच्छुद्धि भर्त्सनस्य, येन वेत्रलतास्त्रुट्यन्ति । एवमाकक्ष्याप्रवेशादा च तान्नि-ष्क्रमणात् निमेषमप्यनवकाशमानान् सविलासभाषणस्यापि दमयति नोवृषभयुवदाम निर्घृण' । (पुनर्विचिन्त्य) नेयता परिसमाप्नोति । रात्रावपि निबध्नाति आदशघण्ट चिन्तनादौ, उत्थापयति चातिदूर-

एवोषसः जलादिनोद्वेजयन् । अतिरूढप्रेमभरावपि पितरौ भेदयति तदातदा जिज्ञासितमद्वृत्तौ यत्किंचिद्बोधयन् येन आमरणं जिहासेतां । हन्त अन्नभक्ष्यादिना तदातदोत्सवेषु मा सभावयतो धनिनो मे प्राचीन-बन्धुवर्गस्थान् अतिश्रममपादितपरमप्रीतीन् विघटयति दुष्टमाशय मयि सप्रत्यय मुत्पादयन् । किमर्थ पुनरुपाध्यायानां एव जातीयको यत्न. । अध्ययनार्थं वयन्नियमिता अध्यापनार्थं च ते । तदिह करोतु स आत्मकृत्य नास्मद्विषयेपि प्रवेष्टुमीष्टे । यत्सत्य मन्ये तत्राद्दशस्यैव नरकमहाग्नि प्रज्वलनायैवजातीयकानि काष्ठानि सञ्चिनोति सर्वहर'-योन्येषां मनोनिर्दय तापयतां क्कस. नरक । अपिनाम संपादयेत् सर्व, शक्ति परमेश्वरो मद्भाव तस्य तद्भावच मम येन यावदिच्छापूर्ति तानपि प्रकारान् दण्डने आरचयेय. येन केनाप्यनुष्ठिता' । (स्मरण-मभिनीय सहस्तपेष सकटकटदन्तविचूर्णन च) वैधवेय कृत्रिम-मित्र भद्रक जपजपकर्णजाह तस्य रन्ध्रान्वेषिण उपाध्यायहतकस्य । अक्षैर्वादीव्येय नाटकानि वा प्रत्यह प्रेक्षेय, अन्ततोवागगनाभिर्वारमेय, यथेष्टवापणात् भक्ष्याणिक्रीणीया, चोरितपुस्तकादिविक्रयणादिनैतद-नुगुण द्रव्य अर्जयेय, किमियता ते पितामहसचितस्यार्क्थस्य लेशतो हीयते² भवतुभवतु । सर्वथा—

"उपकृत बहु तत्र सखे सुजनता प्रथिता भवना परम् ।
विदधदीद्दशमेव सदा सखे सुखितमास्स्व तत.शरदां शतम् ॥"

परन्तु "एति जीवन्तमानन्दो नर वर्षशतादपि" इति वचनमनुसन्द-धानस्य वैतण्डिकस्य जयन्तीमातुर्मे मन्ये हस्तात्सर्वथा विमोक्ष्यस इति अरे दास्या.पुत्र मृत्पिण्डपेष तेऽङ्गमुत्तममर्पिषतो जयन्तीमातुर्मे गलात् न निष्क्रामेयुरनन्तकालेपि प्राणा । शपामि यज्ञोपवीतेन इत्याविष्टद्वेष-पिशाचिको विस्मृत्यात्मानं सहसोत्पाट्य च्छित्वा जिहासति यज्ञतन्तु

(आवेष्ट्य सव्य बाहु उपदक्षिणस्कन्ध वीरलक्षणमिव ताडयन् दक्षिणेन वामबाहुमध्ये) ॥

सुन्दरकस्तु मित्र उपसहर वेगमिति शुध्यर्थमुपदिष्टेन कमण्डलु-धृतजलेन नेत्रे अस्य निर्मार्ष्टि । अथ क्षणैः लब्धसज्ञ आह ।

सुन्दरक.—मित्र सुन्दरक स्थानेखल्वष्टमीति पर्वेति प्रतिपदिति शिष्टाभ्यागम इति चैवजातीयकै· व्याजैस्समीचीनो मार्ग· प्रदर्शितो महर्षिभिरेवविधस्य दुर्मुखस्य दर्शनं परिहर्तुमायासं वा प्रवृत्त निरोद्धु इति । (पुनर्विचिन्त्य) अङ्ग किमन्य देवमुपास्से इममेव सहस्ररश्मि-मुपास्व यो नितान्त तापयनि येन महान् विरामोऽनध्याय इति द्वैमासिक क्लृप्तः । यदि स एष आर्द्रहृदयो दयेत, यदि चेतोप्यधिक तापयेत्, यदि स दुर्मुखो नितान्त खिन्नो नेशेताध्यापयितु,· त्रैमासिक श्चातुर्मासिको वैष सपद्येत इति ॥

एव बहुनिन्दा श्रवणकटु सोढुमशक्नुवन् महानर्थभियोपदेष्टु प्रतिवक्तु वाऽपारयन् यावद्भगवन्तमेव शरणमगान्मनसा सुन्दरक· । इयता गतिर्मन्दाजनि ॥

अन्ये चाथ व्यवहरन्त आभ्यां संगता । अश्रूर्णोदेषोन्तिका-दतिदारुणरोगखिन्न कथयन्तमन्त्यवयस्कं—

"अप्यपगच्छेत् राजयक्ष्मा? अपि जिघ्रेय स्वास्थस्य गन्ध-मात्रामपि? अपि प्रचोदयेत्तरुणजनानिविष्टां मतिं सर्वमङ्गलाजानि? येनात्मजानुगुणं लेशमपि व्युत्पत्तेरासादयेयम्, येन बहुपुत्रपुत्री जायां बहुव्ययशीलां आराध्नुयाम् इतस्ततोटन् द्रव्यसंपादनेन बह्वीमपि मर्मभिदां निन्दां सहेयमात्मज्ञानमहिम्ना । स तादृशोऽनेहाव्यर्थित· यत्रात्मजबोध-मबोधयदाचार्य अतिक्रौर्यमपि मदनुष्ठितं सहमानः अन्तत आत्मजमपि हि तस्य प्राक्षिपं कूपे चौर्यं तत्राचरन् रक्षकत्वेन नियुक्तस्तदसन्निधाने

पाठनक्लेशमनुसन्दधानः । स एष दयालुर्दुरदृष्टकृत तत्सर्वमाकलयन् न मात्रयाप्यखिद्यत । वैदुष्यराधितराजन्योपहृतार्धराज्योपि नाचलत् स्वावस्थात' मादृकमिद प्रमथ्नीयात्प्रसभ मन इति दृढनिश्चय' । कोमलमतिभिरेतैरवेव कर्णदाय दातृभिरनुगृहीत धन बहुतिथेषु कालेषु जीवनमधात् सकुटुम्बस्य मे । हा हन्त अध्ययनदिवस' न कोपि सफलीकृतो मया । द्यूतेन नाटकप्रेक्षया विद्यार्थिकलहेन चौर्येण गुरुनिन्दया च सकलोपि स तादृश' सुकुमार काल यापित । तदिद शास्त्र सत्यमनुभूत, यदुच्यते "अत्युत्कटै. पुण्यपापैरिहैव फलमश्नुत" इति । सर्वथा नास्ति मत्सम पातकी । हा रक्ष रक्ष भगवन् महाकालेश्वर अज्ञमिम दीन दीनबन्धो" इत्यादिना ॥

इत्थं निजदुष्कृतिसंततिसम्मरणसजातमतिचाञ्चल्य देवतीर्थे सुन्दरकेण सहावगाह्य सान्ध्य कृत्यमनुष्ठाय स्फुटघटितमूर्धाञ्जलिपुटो ध्यायन् महाकालेश्वर मुहूर्त मवास्थित क्षणमिव ॥

अथान्यवत् वृक्षमूलमासाद्य अपमृष्टबुद्धिमालिन्य इव दैवेन आह वैतण्डिक—"हा हन्त सर्वमन्यथा गृहीतम् । सर्वथा अस्थिरमतयः बालिका बालका वा । तन्नात्मन प्रभवन्ति । तत्पत्यादितन्त्रेव स्त्री आचार्यतंत्र एव माणवको राध्नोति । नैव तु विरामो देयः क्षणमपि तस्मै । चचल हि मन । तद्वञ्चिता एवर्षिभि स्तानि तानि दिनान्यनध्यायानाचक्षाणै । सुतरां च सहस्ररश्मिना, यो बहुकालमाचरति प्रातिकूल्यमत्युग्र तपन् । तत्त्वरितमितो गुरुकुल प्रविशाव । वसाव च कृत्स्नमप्यनध्याय अनाचरतौ" इति ॥

अत्राह सुन्दरक—अंग यद्यन्यथयामि. तर्हि गुरुतंत्रो वसामीति रिक्तं वचः ॥

वैतण्डिक —न रिक्त, तदानीमपि गुरुकुल एव वसत· ॥

सुन्दरकः—ननु शास्त्याचार्य अध्ययनानर्ह कालमनध्याय इति तद्बलादेवाध्येतारोध्ययने प्रवर्तनीया इति ॥

वैतडिक —कथकार पुनरार्हन्ती वानार्हन्ती कालगता वेद नीया यावता प्रत्यक्षेण न कमपि विशेष पश्यामोऽर्हत्वेन वाभिमते काले ॥

सुन्दरक.—पश्याम इति प्रतिजानीमहे । यदि नवनव पाठमधीमहि सर्वासु तिथिषु अधोधस्तनं पाठ विस्मरेम, ततस्तदपेक्षो नूत्न· पाठ छिन्नमूल नात्मन कृत्याय प्रभवेत् । यदा पुन. तदातदानध्याया· प्रथेरन् दृढतां नयेरन्नधोधस्तना पाठा , तत्तन्नाश्च नूत्नाः पाठा प्रभवेयुरात्मन कृत्याय । किं.चान्यत्—न खलु श्रान्त पुन-पुनरारोपितभार· देशान्तर प्राप्तु पर्याप्नोति । अनेन निदर्शनेनानवगच्छ मतिरपि श्रमापनयसापेक्षैव उपर्युपरि प्रसरीसर्तीति । किं चान्यत्—आह हि भवान् बुद्धिर्हि चचलेति अतएवाचक्ष्महे परीक्षणार्थमनध्याय इति। यर्हि हि गुरावायतावहे तदा रमणीयमासेवामहे अन्यदापि यदीद मनो रमणीयाचारान्नप्रच्यवेत तदा सफलो नो गुर्वधीनतायत्न । तत्परीक्षणार्थमप्यनध्याय. सफल इति ॥

वैतण्डिकः—अथ मा परीक्षि मनः, किन्नश्छिद्यते ।

सुदरकः—बहुना च्छिद्येमहि । यदि हि वय यावज्जीव गुरावायतेमहि नान्यान् वटून् शिक्षयितु प्रभवेम, अस्मद्गुरवोपि तद्गुरुष्वायत्ता नास्मान् । तेतेपि तत्तद्गुरुष्विति नकचि द्व्यवतिष्ठेत । अशक्य चेद तत्तद्गुरव. तत्तच्छिष्यजीवनं यावत् जीवेयुरिति कोहिनामैतन्निश्चिनुयात् । तत्सिद्ध नवनवपाठानुगुण्यार्थं तदातदानध्यायो दृष्टप्रयोजन इति मतितैक्ष्ण्येनोपकारक इति गुरूपदिष्टाचारपरीक्षया

स्वाशिष्योपदेशेप्युपकारक इति । एतेन महानध्याय. द्वैमासिकस्त्रैमा-
सिकश्चातुर्मासिको वा व्याख्यात । तत्रापि बहुदिनाधीताः ग्रथा.
सकृदपिवावर्तितु शक्यन्ते येन वत्सरीन्तराया. ग्रथा उपक्रियेरन् ।
मतिर्वा बहुक्लेशखिन्ना आप्याय्येत शक्त्या विरामजन्यया । आचरन्नपि
यथाधीत रमणीयं तावत्सुदिनेषु अप्रमादी यदि अथ शिष्यमनुशासितु-
मलमिति । विशेषतश्च धर्मप्रयुक्ता अशक्ति र्बुद्धेरिति नैषा कृत्येषु
व्यापारयितु युज्यत इति ॥

वैतण्डिक'—नन्वध्ययने क्लृप्ता दिवसा अनध्याया' सन्तु अन्ये-
त्वन्य इति वैपरीत्यमापतति, यदीमान्येव प्रयोजनानि । अत्यता-
पचारेण शक्तिहर धर्मकालोपि परिह्रियते, येनासौ शक्तिमेवादधीत ॥

सुन्दरक —नेद मत युज्यते—अनवस्थानात् । अनवस्था हि
प्राप्नोति त्वमन्यथाऽन्योन्यथा तदितरोन्यथेति कस्य मतं प्रमाण' सर्व-
मतमविशेषात् प्रमाण चेत् सर्वदानध्यायोऽध्यायोवेति न क्वचिद्व्यव-
तिष्ठेतेति ॥

वैतण्डिक —नन्वाचार्यमत प्रमाण सोन्यथाकरोतु ।

सुन्दरक —यद्याचार्यमत प्रमाण सोन्यथाकरोत्विति त्वन्मत
तत्र किमर्थमासजयासि । यद्यासजयासि अन्योन्योप्यन्यान्यमतामिति
सैवानवस्था दुरुद्धरा ॥

वैतण्डिक —नन्वाचार्य' स्वतएव कुतोनान्यथयत्यनध्यायान् ।

सुन्दरक —ननूक्तैवानवस्था पुन पुनस्तदेव पिष्ठ पिनाक्षे। तदेव
विमृष्टा दृष्टज्ञानाचरणमात्रप्रयोजना अनध्याया । अथ येषामदृष्टा-
नुबन्धिनो नियमाशेनानध्याया., नतेष्वशतोपीष्ट आक्षेप्तु सुशिक्षितोपि ।
कालविशेषप्रयुक्तानि अदृष्टानि तत्वानीतिहेतोः ॥

वैतण्डिक.—कथमिदं विश्वसनीय'

सुन्दरक'—सैषाम्त्यत्र सरणि । षड्सोपादानद्रव्यबीजानि वपन्ति कर्षका. अभिन्ने स्थाने व्यत्यस्य व्यत्यस्याशतवर्षेभ्यः प्रति-वर्षं । पार्थिवाप्यतैजसवायवीया. अशा उपकारकाः समाः । भिन्ना एवतु रूपरसगन्धा उत्पद्यन्ते नक्तस्य हेतो ?

वैतण्डिक —ननु तत्तद्बीजानि भिन्नानीति ।

सुन्दरक.–ननु बीजोपादानभूता पार्थिवाद्यशा समाना इत्युक्त, बीजान्येवोच्चावचानि कुत उत्पद्यन्ते ?

वैतण्डिक'–ननुतथैवोत्पद्यत इति स्वभाव नतुदृष्टेऽनुपपन्न नामति

सुन्दरक —सत्य, शक्तिविशेषमहमाचक्षे स्वभाव भवान् । वैजात्यहेतु पर परतत्तच्छब्दाभिधेय इत्युभयोःसम ॥

वैतण्डिक'— तिष्ठत्वेतत् । प्रकृते किंसिध्यति ?

सुन्दरक —इदं सिध्यति कालविशेषोपि वैजात्यहेतुरिति । स्पष्टचेद तत्तद्दतुमात्रोत्पत्तिकेषु सस्येषु । इहचानध्यायदिवसाधीतेषु शक्तिहानिरन्यत्र तत्सिद्धिरिति ॥

वैताण्डिक —कथपुनरमू शक्तिसत्तासत्ते अमीषा कालविशेषाणां अवधृते ?

सुन्दरकः—धर्मादितिब्रूम । धर्म हि साक्षात्कृत्य निर्णीता इमे अध्यायानध्यायाः महर्षिभिरिति ॥

वैतण्डिकः—ननु धर्म इति क. पदार्थ ॥

सुन्दरक —यं शिष्टा आचार्या उपदिशन्ति । यंच पुनर्विनि-न्दन्ति सोऽधर्मः ॥

वैताण्डिक.—नन्वेवं तर्हि सर्वेऽपि निन्दितास्तदातदा यानहमनु-तिष्ठामि अधुनात्वेऽपि आचार्यानिंदादीन् । भवतु किंफला. पुन रिमेऽधर्माः ॥

सुन्दरक'—महानरकफला. ।

वैतण्डिक'—अशनिहतवत् सम्भ्रान्त हाहन्तमहाकालेश्वर रक्ष रक्ष दीनमिमं क्षमस्वापराधान् अज्ञस्य बालिशस्य इत्यादिना मुक्तकण्ठ रुदन् दह्यमानहृदय सहसात्यत्क्वा वृक्षच्छाया देवस्य सान्निधौ लुठन् मूर्च्छति । अथमुहूर्तादुत्थित देवस्य प्रसाद गृह्णन् तथैवानुतिष्ठामि सदावदन् सहैववयस्येनोपविष्टस्तत्रैव ॥

सुन्दरक'—अङ्ग जयन्तीमात' तथैवेति कोर्थ । अपि कथितोनुष्ठानप्रकारः केनापि ॥

वैतण्डिक—बाढ किमङ्ग परीक्षितुमिच्छासि । युष्मत्समक्षांमेवान्वशादुमाजानि "माभैषीर्बालक. यथाचरितं यथाचिन्तित च गुरवे निवेद्य क्षमापय. यथानुशासन च मात्रयाप्यप्रच्युत' अनुतिष्ठ श्रेयासि त्वामनुबध्यासुरि"ति । तदनुयुष्मत्समक्षमेवान्तरधादिति ।

सुन्दरक'—एहि मित्र तथैवाचराव ।

इति सवदमानौ उत्सवसुखमनुभूय पुनःपुन भगवन्त सप्रार्थ्य यथागत प्रत्यागत्य धर्मानाचरन्तौ अन्येषामपि मूर्खाणा विधेयाना सन्मार्गप्रदर्शकौ सर्वैस्सह श्रेयसा भूयसान्वमोदेतामितिशिवम् ॥

शिवसुब्रह्मण्यशास्त्री.

## अङ्गत्वनिरुक्तिः.

### कारकत्वविचारः

(अनुवृत्ता)

---

नखनिर्भिन्नमित्यादौ करणत्वस्य षष्ठीलक्ष्यत्वेपि व्रीहीणां यागाग-त्वमुपपादनीयम् । एतेन उत्तरेऽहन् द्विरात्रस्यगृह्णत इत्यादौ लिङ्गस ङ्ख्याव्यतिरिक्तसुबर्थमात्रस्य भावनान्वयनियमेन षष्ठ्यर्थसम्बन्ध-स्यापि भावनान्वयापत्तेरातिव्याप्तिः । न हि तत्र द्विरात्रीयोत्तराहरुद्दे-शेन षोडाशीग्रहण विधीयते । विशिष्टोद्देशे वाक्यभेदात् । न च षष्ठीस्थले परस्परान्वयस्य व्युत्पन्नत्वादवाक्यभेद । तथात्वेपि उभा य हविरितिवदुत्तरेहान्नित्यत्र अह्नि उत्तरत्ववैशिष्ट्यायोगेन वाक्यभेदात् । वस्तुतोलिङ्गसङ्ख्याभिन्नसुबर्थमात्रस्यैव लाघवेनभावनान्वयात् षष्ठ्यर्थ-स्यापि भावनाव्यतिरेकेणान्वयोऽव्युत्पन्नएव । अतो द्विरात्रसम्बन्धिनी षोडशिग्रहकरणिका भावनोत्तरपदार्थभागोद्देशेन विधीयते । उत्तरभागस्य च प्रतिसम्बन्ध्यपेक्षायामरुणैकहायनीन्यायेन पार्ष्ठिकबोधे द्विरात्ररूप-प्रतिसम्बन्धिलाभ. । द्विरात्रसंबन्ध्युत्तरभागस्य च अहोरूपत्वादैन्द्र-वायवाग्रप्रथममहारितिवदहान्नित्यनुवाद इत्यैव बोध्यं। तथा च क्रियान्वि-तविभक्त्यर्थान्वितत्वेन द्विरात्रे अतिव्याप्तिरित्यपास्तम् । विभक्तिनिरू-पितसबन्धत्वानवच्छिन्नशक्तिविषयत्वानिवेदनादोषात् । वस्तुतस्तु लाघ-वात् षष्ठ्याः कर्मत्वलक्षणामङ्गीकृत्य द्विरात्रोद्देशेनैव षोडशिग्रहणविधिः । द्विरात्रीयोत्तराहन्येवचातिरात्रसंस्थाकत्वेन तत्रैव विकल्पितषोडशीग्रह-णप्राप्तेः नियमविधिलाघवानुरोधेनास्य विधेरेतद्विषयत्वात् उत्तरेहान्नि-त्यनुवाद' अतएव द्विरात्रसम्बन्ध्युत्तरभागोद्देशेनैव षोडशिग्रहणविधि द्विरात्रसम्बन्ध्युत्तरभागस्यचाहोरूपत्वात् अहान्नित्यनुवादइत्यप्युक्तरीत्यैव

लघुभूतोद्देश्यतावच्छेदके सभवति गुरुभूतोद्देश्यतावच्छेदकायोगात् अयुक्तम्। न च उक्तप्रकारेण द्विरात्रत्वस्योद्देश्यतावच्छेदकत्वात् औत्तरकालिकानियमविधिलाघवानुरोधेन अस्य विधेरुत्तराहमात्रविषयतया सकोचरूपबाधकल्पनमयुक्तमितिवाच्यम् द्विरात्रस्वरूपे आनर्थक्ये प्रसक्ते दीक्षणीयावाङ्नीयमन्यायेन अवान्तरापूर्वसाधनत्वलक्षणाया द्विरात्रजन्यैकावान्तरापूर्वाभावेनासभवेप्युत्तरपदसहकृतापूर्वाव्यभिचाररूपतात्पर्यग्राहकानुरोधेनोत्तराहर्जन्यविजातीयपूर्वद्वारकपरमापूर्वसाधनत्वावच्छिन्नस्यैव लक्षणयोद्देश्यत्वात् द्विरात्रस्योद्देश्यतानवच्छेदकत्वेऽप्यनुपपत्यभवात्। आवश्यकी चेयमानर्थक्यभियाऽपूर्वसाधनत्वावच्छिन्नलक्षणाद्विरात्रसबन्ध्युत्तराहरुद्देशेन षोडशिग्रहणविधिमभ्युपगच्छतां प्राचामपि। परन्तु — द्विरात्रसंबन्ध्युत्तराहरूपवाक्यार्थसम्बन्धेनोक्तपरमापूर्वसाधनत्वलक्षणेति विशेष। किञ्च त्वन्मते उत्तरेहन्निति सप्तम्या अधिकरणत्ववाचिन्या स्वशक्यतावच्छेदकानवच्छिन्नकर्मणि लक्षणा अस्मन्मते तु सबन्धसामान्यवाचिन्या षष्ठ्या स्वशक्यतावच्छेदकावच्छिन्नलक्षणेत्यपि बोध्यम्। नचैवमपि चतुर्थ्या सप्रदानत्वशक्तत्वेन देवतात्वस्य विभक्त्यर्थत्वायोगात् 'यदग्नयेच प्रजापतये च साय जुहोती' त्यादौ देवताया होमांगत्वानापत्तिरिति वाच्यम्। त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिगृहीतृत्वरूपसप्रदानत्वस्य चतुर्थ्यर्थत्वेन तद्घटकत्यज्यमानद्रव्योद्देश्यत्वरूपदेवतात्वस्याऽपि तदर्थत्वानपायात्। यदि च विप्राय गां ददातीत्यादौ सप्रदानीभूतविप्रादौ देवतात्वव्यवहाराभावेन तत्र प्रतिगृहीतृत्वाभावोऽपि अधिको निवेश्यते। अग्निषोमीये व्यासज्यवृत्तिदेवतात्वानुरोधेन वा अखण्डोपाधिरूपमेव देवतात्वमुच्यते तदास्तु कृत्यन्वितकर्तृत्वाद्यन्यतमान्वितत्वमेव कृतिकारकत्व। देवतात्वस्याप्यन्यतमान्तर्गतत्वान्न दोषः निमित्तत्वादीनान्तुतदनन्तर्गतत्वान्न निमित्तादा-

वतिव्याप्तिः। एवञ्च पूर्वोक्तकर्मकारकभेदस्य लक्षणेऽनिवेशेपि न क्षतिः। कर्मत्वस्य कर्त्राद्यन्यतमानन्तर्गतत्वेन स्वर्गादावतिव्याप्त्यभावात्। एवंविधान्यतमत्वबोधनार्थमेव सूत्रस्थं परपदमिति ध्येयम्। विहितत्व च न प्रवर्तनारूपविधिजन्यत्व प्रवर्तनाज्ञानस्यैवेष्टसाधनत्वादिज्ञानद्वारा प्रवृत्तिप्रयोजकत्वेन प्रवृत्तावेव तदभावे तत्कारकेषु सुतरा तस्याभावात्। अतएव न प्रवर्तनाज्ञानजन्यत्वमपि। नापि साक्षात्परपरासाधारणविधिप्रयोज्यत्वं जात्यादिरूपेऽङ्गेऽव्याप्तेः। तस्य नित्यत्वेन विधिप्रयोज्यत्वाभावात्। अनित्यानामपि सोमादीनां सिद्धरूपत्वेन विधिप्रयोज्यत्वाभावाच्च। अतो विध्यन्वयित्व विहितत्वम्। तच्च स्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकत्वसबन्धेन विधिविशिष्टत्व। अस्तिचेद यागादौ। प्रवर्तनानिष्ठप्रकारतानिरूपितार्थभावनानिष्ठविशेष्यतावच्छेदकत्वं करणत्वादौ। तदवच्छेदकत्वस्य तत्रसत्वात्। नन्विदं धातुलक्षितकरणत्वादेर्भावनाया प्रकारतेतिमते सभवति। करणत्वादिसंसर्गेण धात्वर्थस्य भावनाया प्रकारतेति मते तु अर्थभावनानिष्ठविशेष्यतावच्छेदकत्वस्यैव यागादौ सत्वात् स्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकत्वसम्बन्धेन विधिविशिष्टत्वाभावान्नोक्तवितत्वस्य तत्र संभवइति चेन्न। स्वनिष्ठप्रकारतानिरूपिताविशेष्यतावच्छेदकत्वतदवच्छेदकत्वान्यतरसम्बन्धेन विधिविशिष्टत्वस्य विवक्षितत्वात्। नचैतस्य सुबर्थकरणत्वादिसाधारणत्वादंगत्वलक्षणस्यातिव्याप्तिरिति वाच्यम्। तेषु निरुक्तविहितत्वसत्वेऽपि निरुक्तकृतिकारकत्वाभावेनादोषात्। यद्यपि धात्वर्थस्यैव करणत्वादिसंसर्गेण भावनायामन्वयइतिमते यागादावपि नोक्तकृतिकारकत्व सभवति। तथापि कर्तृत्वाद्यन्यतमसंबन्धेन कृत्यन्वितत्वकृत्यन्वितकर्तृत्वाद्यन्यतमान्वितत्वान्यतरवत्वमेव तन्मते कृतिकारकत्व। धात्वर्थे उक्तसम्ब-

न्वेन कृत्यन्वितत्वसत्वात् सोमादिकारके चोक्तान्यतमान्वितत्वसत्वान्नो-क्तदोष । सुबर्थे निरूपकत्वादिसबन्धेन कृत्यन्वितत्वसत्वात् अतिव्याप्तिवारणाय कर्तृत्वाद्यन्यतमसम्बन्धनिवेश । अतएव 'दन्धेन्द्रियकामस्य जुहुया' दित्यादौ आश्रयत्वादिसम्बन्धेन होमस्य कृत्यन्वितत्वेऽपि नेन्द्रियागत्वप्रसङ्ग । वस्तुत पूर्वोक्तरीत्या धातुलक्षितकरणत्वादेव प्रकारतया भावनान्वयात् लघुभूत कृत्यन्वितकर्तृत्वाद्यन्यतमान्वितत्व कृतिकारकत्व स्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकत्वसबन्धेन विधिविशिष्टत्व विहितत्वमित्येव ज्यायः । विहितत्व चेद निर्विषयभावनाया प्रयोज्यतासम्बन्धेन प्रवर्तनान्वयायोग्यत्वात् प्रथमत कृत सकलकारकान्वय ततस्सकलकारकविशिष्टायां भावनाया प्रयोज्यत्वसम्बन्धेन प्रवर्तनानान्वय इत्येकविशिष्टे अपरवैशिष्ट्यमितिरीत्या शाब्दबोधमभिप्रेत्योक्तम् । अतएव तन्त्ररत्ने सप्तमे पञ्चसञ्चरोप्वितिसूत्रे विकृतावर्थवादातिदेशेऽपि विश्वजिदादौ न आर्थवादिकफलकल्पनेति प्रतिपादयितुमुक्तम्। विधिर्हि त्र्यंशपरिपूर्णामनुष्ठानोपयोगिभावनां प्राप्य पश्चात्पुरुषं प्रवर्तयितुं प्रवर्तमाना अपेक्षावशात् प्राशस्त्यज्ञानमुखेन अर्थवादान् यत्र क्वचन स्थितानतिदेशेन सन्निधापयति । विषयभावना तु तत' प्रागेव स्वांशान् गृह्णाति । तस्यां वेलाया उपदेशेनातिदेशेनवाऽर्थवादस्यासन्निधानात् तदुपात्तसन्निहितफलाभावात् स्वर्गमेव गृह्णातीति न स्वर्गन्यायबाधइति । यदा तु योग्यताज्ञान विनापि अयोग्यतानिश्चयाभावमात्रेण शाब्दबोधस्यानुभाविकत्वात् एकत्र द्वयमितिरीत्या युगपदेव भावनाविशेषणानामन्वय' । समानाभिधादिरूपप्रत्यासत्त्यनुग्रहे वा प्रथमं प्रवर्तनादीनामेव तत्र अन्वय तत इतरकारकान्वय । भाव्यभूतार्थभावनायां कारकान्वयात्पूर्वं भाव्यविशेषाकांक्षाकलुषितत्वेन प्रवर्तनाया विस्पष्ट-

मितिकर्तव्यताकांक्षानुत्थानात् नार्थवादाति इति न विश्वजित्यार्थ-वादिकफल्पनापत्तिरित्युच्येत । तदा पूर्वोक्तनिर्वचनानुपपत्तेर्लाघवाच्च प्रवर्तनारूपविधिविषयत्वमेव विहितत्वम्। अस्ति च विशिष्टभावना प्रवर्तनानिषयत्वात् तद्विशेषणेष्वपि प्रवर्तनाविषयत्वमित्यपिध्येयम्। अथैवमपि नानृत वदेत् इत्यादिनिषेधेषु प्रकृतलक्षणाव्याप्ति । तथाहि । निवर्तनारूपे प्रवृत्यभावरूपे वा निषेधेनोक्तलक्षण सम्भवति । कृतिकारकत्वाभावात् । निवर्तना हि प्रयोज्याभावप्रतियोगित्वसम्ब-न्धेन आख्यातार्थकृतावन्वेति । एवं प्रवृत्यभावोपि प्रतियोगितासम्ब-न्धेनेति न तयोरुक्तविध कृतिकारकत्वम् । एव स्वनिष्ठ— प्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकत्वसम्बन्धेन प्रवर्तना-विशिष्टत्वरूप प्रवर्तनाविषयत्वरूप वा विहितत्वमपितयो न सम्भ-वति । निषेधेषु निवर्तनायाएव उक्तसम्बन्धेन अर्थभावनायामे-वान्वयात् । यदि तु उक्तसम्बन्धेन प्रवर्तनानिवर्तनान्यतरविशि-ष्टत्व तदन्यतरविषयत्वमेव वा विहितत्वमित्युच्येत ततो न कळञ्ज भक्षयेदित्यादौ भक्षणादीनां कळजाद्यङ्गत्वापत्ति । निवर्तनारूपे निषेधे तस्याप्यभावाच्च। नहि स्वनिष्ठप्रकारतानिरूपिविशेष्यतावच्छे-दकतावच्छेदकत्व स्वविषयत्व वा स्वस्मिन्सम्भवति । न च निषेधा नामलक्ष्यत्वम् । तथात्वे कर्त्रधिकरणादौ तेषा क्रत्वर्थत्वादिनिरूपणाना-पत्तेरिति चेत् सत्यम् । तेषु अङ्गत्वव्यवहारस्यैव गौणत्वात् । अत एव "नानृतं वदेत्" इत्यादौ निषेधो निवर्तना यदि निवर्तना तर्हि तस्या क्रतुवैगुण्यजनकक्रियाविषयनिवर्तनात्व क्रत्वर्थत्वम् । निवर्तनात्वनि-वेशात् अनृतवदनज्ञानादौ नातिव्याप्तिः । यदि प्रवृत्यभावः तदा तस्मिन् उक्तक्रियाप्रतियोगित्व । नच नातिरात्रे षोडशिन गृह्णा-तीत्यादिविध्युत्तरनिषेधे निषेध्यस्य क्रतुवैगुण्याजनकत्वादव्याप्तिः ।

क्रतुवैगुण्यक्रतुसाद्गुण्याद्यन्यतरजनकत्वस्य विवक्षितत्वात्। नचप्रवृत्यभावनिषेधपक्षे प्रयाजक्रियाभावादौ अव्याप्ति। उक्तक्रियाप्रतियोगित्वे सति वैदिकनिवर्तनाविषयत्वस्य विवक्षितत्वात्। एवं "न कळञ्जं भक्षयेदि" त्यादौ पुरुषनिष्ठप्रत्यवायजनकक्रियाविषयत्वं उक्तविधक्रिया प्रतियोगित्व वा पूरुषार्थत्वम्। अतएव गौणमुख्यसाधारण्येनाङ्गत्व तृतीयाध्यायार्थइति न कर्त्रधिकरणादौ अध्यायासङ्गतिरितिध्येयम्। एवञ्च फलञ्च पुरुषार्थत्वादित्यत्रोक्त भाक्तमेव फलस्य पुरुषार्थत्वम्। एवमेव च यागादे भावना प्रति प्रातिपदिकार्थस्य च कारक प्रति लिङ्गसङ्ख्यादेश्यप्रातिपदिकार्थं प्रति करणत्वादेश्यभावनां प्रति तां प्रत्येव च शाब्दभावनादे· अङ्गत्वव्यवहारो गौणो विशेषणत्वमात्रविवक्षया द्रष्टव्य·। उक्तविधाङ्गत्वोक्त्यैव चाङ्गत्वघटकीभूतोद्देश्यताशालित्वरूप अङ्गित्व अर्थात् सिद्धम्। अत सूत्रकृता न पृथगुपन्यस्तम्। न वा तृतीयाध्यायार्थ। अत्र च अङ्गत्वघटकीभूतकारकत्वनिष्ठकर्तृत्वाद्यन्यतमनिरूपक·वमङ्गित्वम्। तथात्वे स्वर्गादिवृत्तिकर्मत्वादिनिरूपकत्वेन भावनाया स्वर्गाङ्गित्वापत्ते। उक्तापेक्षयाऽस्य गुरुत्वाच्च। अतएवाङ्गत्वघटकभूतभेदप्रतियोगित्वमाङ्गित्वम्। स्वर्गादिरूपकर्मकारकादिभेदस्य पूर्वनिवेशितत्वाच्च स्वर्गादौ लक्षणसमन्वयइत्यपिना। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वरूपभेदत्वनिवेन गुरुत्वात्। कर्तृत्वाद्यन्यतमत्वघटकभेदप्रतियोगित्वमादायातिव्याप्त्यापत्तेश्चेति सक्षेप। इद च अङ्गत्व प्राचीनोक्तपरोद्देशप्रवृत्तकृतिव्याप्यत्वमेव परिष्कृत्योक्तम्। वस्तुतस्तु लाघवात् यन्निष्ठोद्देश्यतानिरूपितविधेयताशालि यत् तदङ्ग सर्वेषामेवाङ्गाना श्रुतै आर्थिकैर्वाविधिभि स्वस्वप्रधानोद्देशेन विधानात्सर्वत्र लक्षणसमन्वय। उद्देश्यताविधेयतेच स्वरूपसम्बन्धरूपे न तु साध्यत्वानुष्ठेयत्वात्मिके।

तेन उक्तविधेयत्वाभाववति कालादौ उक्तोद्देश्यत्वाभाववति नरकाभावोद्देशेन विधीयमानविवाहार्थानृतवदनादौ च नाव्याप्ति । न वा तयोर्निरूप्यनिरूपकभावे मानाभावेन लक्षणासम्भव । एव विधाङ्गत्वस्य च तृतीयाध्ययार्थत्वादेव च स्वयप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयत्वस्वयप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयत्वरूपयो क्रत्वर्थत्वपुरुषार्थत्वयो॰ अङ्गत्वविशेषत्वेन मूले तृतीयसिद्धत्वोक्ति । पूर्वोक्ताङ्गत्वस्य तृतीयाध्यायार्थत्वे तु विधेयत्वरूपयोः क्रत्वर्थत्वपुरुषार्थत्वयो. निरुक्तकारकत्वादिरूपाङ्गत्वविशेषत्वाभावात् न तृतीयसिद्धत्वमिति चतुर्थे निरूप्यत्वापत्ति । न च निरुक्तकारकत्वादिरूपाङ्गत्वव्यापकत्वादेव क्रत्वर्थत्वपुरुषार्थत्वान्यतरस्य तृतीयाध्यायसिद्धत्वमिति वाच्य तथात्वे आमिक्षाप्रयोज्यत्वस्य आमिक्षाङ्गत्वव्यापकत्वात् तृतीयसिद्धत्वेन चतुर्थे प्रतिपाद्यत्वानापत्ते. । यदि निरुक्तोद्देश्यतानिरूपककृतिकारकत्वरूप-क्रत्वर्थत्व पुरुषार्थत्वञ्च निरुच्य पूर्वोक्ताङ्गत्वविशेषत्व तयोस्समर्थ्यते । तदा "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यादौ" स्वर्गादिनिष्ठोद्देश्यतानिरूपककृतिकारकत्वेन पिण्डपितृयज्ञादेरिव कालादेरपि पुरुषार्थत्वापत्ति. । अस्मन्मतेतु कालादेस्स्वर्गादिनिष्ठोद्देश्यतानिरूपितविधेयतायाः स्वरूपसम्बन्धरूपाया अभावेन नोक्तापत्तिः कारकत्वादिघटनायां गौरवन्तु स्फुटमेव । अतः अस्मदुक्ताङ्गत्वस्वीकारेणैव निरुक्तविधेयतारूपयो. क्रत्वर्थत्वपुरुषार्थत्वयोः तद्विशेषत्व सङ्गच्छते । सूत्रस्थपरार्थत्वस्याप्ययमेवनिष्कर्षः । न चैवं श्रुत्यादीनामङ्गत्वेकदेशबोधकत्वस्याप्यभावात् अङ्गत्वप्रमाणत्वानापत्ति॰ स्वरूपसम्बन्धरूपोद्देश्यताया॰ एव लक्षणघटकत्वात् द्वितीयाया अपि तदभावादिति वाच्यम् । अङ्गत्वघटकीभूतविधेयतोद्देश्यतान्यतरप्रयोजककर्मत्वकरणत्वाद्यन्यतमबोधकत्वेनाङ्गत्वप्रमाणत्वोपपत्तेः । कर्मणोहि उद्देश्यत्वेनैवा-

न्वयात्कर्मत्वमुद्देश्यत्वप्रयोजक करणादीना तु विधेयत्वेनैवान्वयात्करण-त्वादिक विधेयत्वप्रयोजकम् । तत्र श्रुतेनिरूक्तान्यतमवाचकत्वेनैव निरुक्ताङ्गत्वप्रमाणत्वम् । लिङ्गादीना तु साक्षात्परपरयावा निरुक्तान्य-तमवाचकश्रुतिकल्पकत्वेन तत्वमिति विशेष । निरुक्ताङ्गत्वोत्क्यैव च अङ्गत्वघटकीभूतोद्देश्यताशालित्वरूपमङ्गित्वमर्थसिद्धमेव । अतो न सूत्रे तदुक्त नवाध्यायार्थ. । न च विनिगमनाविरह । यन्निष्ठविधेयता-निरूपितोद्देश्यताशालि यत् तत् तदङ्गि । निरुक्ताङ्गित्वघटकविधे-यताशालित्वरूपमङ्गत्वमर्थसिद्धमित्यस्यापि सुवचत्वादितिवाच्यम्। यत्त्व-तत्त्वादेरनुगमाद्विशिष्यैव लक्षणाना निर्वक्तव्यत्वात्प्रधानापेक्षयाङ्गाना बहुत्वात्तत्तद्धटिताङ्गित्वोक्तौ गौरवापत्तेरेव विनिगमकत्वादिति नवीन. पन्थाः । केचित्तु परोद्देशप्रवृत्तकृतिव्याप्यत्वमङ्गत्वमिति प्राचीनोक्त-लक्षणमेव व्याकुर्वन्ति । अत्र परोद्देशप्रवृत्तत्व परोद्देशनोपपादितत्वम् । तच्च कृतिव्याप्यत्वस्य विशेषणम्। व्याप्यत्वशब्देन चोद्देश्यत्वानुद्देश्यत्व-साधारणविषयत्वमुच्यते । ततश्च विध्यन्वयिन्या कृतौ यद्विषयत्वानुप-पत्ति यदुद्देश्यकत्वेन परिह्रियते तत्तस्यामङ्ग तदर्थचेत्युक्त भवति। प्रसि-द्धञ्चेतत्प्रेक्षावत्कृतावपुरुषार्थविषयत्व तत्साद्धयपुरुषोद्देश्यकत्वमन्तरेणा-नुपपन्नमिति । भवति च वपनादिविषयत्वानुपपत्तिपरिहार पुरुषोद्देश्यक-त्वेन तदुद्देश्यकत्वानुपपत्तिपरिहाश्च क्रत्वपूर्वोद्देश्यकत्वेनेति वपनपुरुषयो पुरुषक्रत्वङ्गत्वसिद्धि । इत्थ यागस्वर्गयो स्वर्गपुरुषौ प्रति शेषत्वमूह्यम् । भवतिहि याग किमर्थं कर्तव्य इत्याक्षेपे स्वर्गायेति समाधि. स्वर्ग' किमर्थमुत्पाद्य इत्याक्षेपे पुरुषार्थमिति समाधिरिति । अत्रत्वेव विभावनीयम् । कथमेतल्लक्षण कालादिषु योजनीयम् । नहि विध्यन्व-यिकृतिवृत्तिकालादिविषयकत्वं प्रसिद्धमस्ति । येन तदनुपपत्तिर्यागाद्युद्दे-श्यकत्वेन परिह्रियेत । त्रिविधा हि कृतिविषयता । साध्यता उपादे-

यता उद्देश्यताचेति । तद्यथा स्वर्गमुद्दिश्य याग साधयितु हविरादिकमुपादत्ते इत्यादिप्रतीत्या यागे साध्यताख्यविषयता स्वर्गे उद्देश्यताख्या हविरादावुपादानताख्या । न च कालादावन्यतमविषयताप्यस्ति । तत्र निरुक्तप्रतीतेरभावात् । अनुपादेयपञ्चकसाधारणोद्देश्यता तु न कृतिविषयता । अन्यथानिमित्तस्यापिकृतिविषयत्वापत्ते' । अत'-कालादावव्याप्ति । अपिच भवन्मते तृतीयादेरङ्गत्वप्रमाणत्वानापत्तिः अङ्गत्वघटकीभूतकरणत्वादिबोधकत्वेन हि तृतीयादेरङ्गत्वप्रमाणत्वमित्युत्कम् । भवदुक्तलक्षणस्य तु तदघटितत्वात् तदनापत्ति । अन्ये तु परोद्देशप्रवृत्तत्व शेषत्व प्रवृत्तिरिति चेतनाचेतनकर्तृकव्यापारमात्रमभिधीयते । अस्ति च सर्वकारकाणां स्वस्वव्यापारे कर्तृत्वम् । सम्भवतिचोद्देश्यतात्मिका विषयता । तत्रापि प्रयोजनाना पाकाय काष्ठानि ज्वलन्ति । धान्याय जल प्रस्रवतीति व्यवहारात् व्यवहारे चाचेतनशब्दकर्तृके अविद्याव्यापारे व्यक्तीनां उद्देश्यत्व भवदेव । प्रकृतिकर्तृकव्यापारे च प्रपञ्चोद्देश्यकत्व कपिल । ततश्च यदुद्देशेन यत् व्याप्रियते तत् तदङ्गमित्याहु । तदपिच यागाद्युद्देश्यकव्यापारकर्तारि शूद्रादावपि यागाद्यङ्गत्वापत्ते विहितत्वनिवेशेपिच तस्यापि स्वरूपतस्तत्कर्तृककर्मणि विहितत्वादुक्तदोषतादवस्थ्यात् । यदुद्देश्यकव्यापारकर्तृत्वेन यद्विहितं तत्तदङ्गमित्युक्तौ च दध्यादिषु वस्तुतो होमाद्युद्देश्यकव्यापारकर्तृत्वेन विहितत्वाभावादव्याप्तेरुपेक्षितम् । विधिप्रयोज्यप्रमाणविषययदुद्देश्यकव्यापारकर्तृत्व यत्र तत्र तदङ्गत्वमित्युक्तौ तु न कोपि दोषः । प्रतीयते हि दध्यादीनां करणत्वादिना विधानेपि यागाद्युद्देश्यकव्यापारकर्तृत्वम् । परन्त्वस्मदुक्तलक्षणापेक्षया गुरुत्वात् तदुपेति ध्येयम् । इदञ्च परार्थत्व अङ्गत्वस्वरूप अङ्गस्य लक्षणम् । तच्चाङ्ग द्विविधं क्रत्वर्थं पुरुषार्थञ्चेति । आद्य प्रयाजादि,

द्वितीयं ज्योतिष्टोमदर्शपूर्णमासादि । अथ किन्नाम क्रत्वर्थत्व पुरुषार्थत्व वा । नहि क्रतूपकारकत्वं क्रत्वर्थत्व पुरुषोपकारकत्व पुरुषार्थत्वमितियुक्तम् । पुरुषार्थगोदोहनादेरपि प्रणयनद्वारा क्रतूपकारकत्वेन क्रत्वर्थत्वापत्ते· । प्रजादेरपि प्रधानद्वारा पुरुषोपकारकत्वेन पुरुषोपकारकत्वापत्तेश्च । उक्तलक्षणयोरेव क्रत्वन्याउपकत्वादिघटनायान्तूभयार्थदध्यादावव्याप्ते । नानाविधोपाकारकसाधारणापत्तेश्च उपकारकत्वस्यैकस्याभावेन तद्घटितलक्षणायोगाच्च । नापि क्रतूद्देशेन विधियमानत्व क्रत्वर्थत्वम् पुरुषोद्देशेन विधीयमानत्व पुरुषार्थत्वम् । क्रत्वर्थे अवघातादौ क्रतूद्देशेन विधीयमानत्वाभावात् क्रत्वर्थलक्षणाव्याप्ते न· अवघातदे क्रतूद्देशेन विधान प्रमाणवत् । विशिष्टोद्देशेन विधाते विशेषणोद्देशेनापि विधेरावश्यकत्वे अपूर्वीयत्वविशिष्टस्योद्देशत्वात् अस्त्वपूर्वोद्देशेनावघातादेर्विधानम् । न तु व्यापारघटकक्रतूद्देशेनापि । मानाभावात् । पुरुषोद्देशेन विधीयमानदीक्षणीयादौ पुरुषार्थत्वलक्षणस्यातिव्याप्त्यापत्तेश्च ज्योतिष्टोमादेस्स्वर्गाद्युद्देशेनैव विधीयमानत्वात् पुरुषार्थत्वलक्षणस्य अव्याप्त्यापत्तेश्चेतिचेत् । अत्र तन्त्ररत्ने पार्थसारथि । स्वय प्रार्थितसाध्याधीनानुष्ठान· पुरुषार्थः । तदुपकारार्थ क्रत्वर्थ इति तयो लक्षणे आह । तत्र स्वयप्रार्थितसाध्याधीनानुष्ठानत्व स्वयप्रार्थितसाध्येच्छाजन्यप्रवृत्तिजन्यत्वम् । अस्तिचेद ज्योतिष्टोमादौ फलेच्छाया उपायेच्छा प्रतिकारणत्वेनस्वयप्रार्थितसाध्यस्वर्गेच्छाजन्यज्योतिष्टोमादीच्छाजन्यप्रवृत्तिजन्यत्वस्य तत्र सत्वात् । स्वयप्रार्थितत्व च शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयत्वम् । यागादयोहि न शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषया । तद्धि लोकावगतेष्टसाधनताज्ञानजन्येच्छाविषयत्वात् भवेत् इष्टसाधनताज्ञानानधीनेच्छाविषयत्वाद्वा भवेत् । नचोभयमपि यागादौ

सम्भवति। तत्र लोकादिष्टसाधनत्वानवगतेरिष्टसाधनताज्ञान विना सुखत्वादिप्रकारकज्ञानादेव सुखादाविवायागत्वप्रकारकज्ञानेपि इच्छाया अनुपपत्तेश्च। अतो यागादौ न स्वय प्रार्थितत्व। स्वर्गादेस्तु स्रक्चन्दनवनिताद्यधिकरणीभूतदेशविशेषरूपत्वे तु तस्य लोकतएवेष्टसाधनत्वावगते सुखविशेषरूपत्वे तु स्वर्गत्वादिप्रकारकज्ञानादेवेच्छोत्पत्तेश्च उक्तविध स्वय प्रार्थितत्वम्। पश्वादिरूपे फले इष्टसाधनताज्ञानाजन्येच्छाविषयत्वाभावादव्याप्तिरतः शास्त्राधीनेति। पश्वादौ तु लौकिकेष्टसाधनताज्ञानादेव इच्छोत्पत्तेर्नदोष। इच्छात्वेन इच्छानुपादाने तु शास्त्राधीनेष्टसाधनताज्ञानाजन्ययागत्वप्रकारकज्ञानविषयत्वात् यागादे स्वयप्रार्थितत्वापत्ति। अतस्तदुपादानम्। इत्थ च शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयसाध्येच्छाजन्यप्रवृत्तिजन्यत्व शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाजन्यप्रवृत्तिजन्यत्व वा पार्थसारथिमते पुरुषार्थत्वलक्षण पर्यवसन्नम्। तदुपकारकत्व च तदुपकारप्रयोजकत्वम् तेन प्रयाजाङ्गाभिक्रमणादे प्रधानोपकाराजनकत्वेपि नाव्याप्ति। अत्रेद बोध्यम्। पुरुषार्थत्वलक्षणेपि काम्यकाले उपनयनाद्याश्रितपञ्चमवर्षादौ काम्यजातौ च दध्यादिरूपायां अव्याप्ति। तयो अननुष्ठेयत्वात्। क्रत्वर्थत्वलक्षणे पूर्वोदाहृतगोदोहनादावतिव्याप्तिः। किञ्चाधानाध्ययनयोरुभयभिन्नत्वेन तन्त्ररत्नोक्तेः तत्र क्रत्वर्थत्वलक्षणातिव्याप्ति। एतेनेतिकर्तव्यतात्वेनान्वितत्वं क्रत्वर्थत्व तद्भिन्नत्व पुरुषार्थत्वमिति शास्त्रदीपिकोक्तमपि परास्तम्। आधानाध्ययनयो पुरुषार्थलक्षणातिव्याप्ते। सिद्धपदार्थस्य सोमादेः इतिकर्तव्यतात्वेनान्वितत्वाभावात्। तत्र लक्षणद्वये क्रमेण अतिव्याप्त्यव्याप्त्यापत्तेश्च। (यदितु)तस्यापि व्यापराविष्टस्य इतिकर्तव्यतात्वमिति विभाव्येत तदादध्न उभयार्थत्वात् तत्र तद्भिन्नत्वाभावात् पुरुषार्थत्वलक्षणस्य अव्याप्ति-

रितिध्येयम् । केचित्तु स्वय प्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताशालित्व पुरुषार्थत्व, स्वयप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताशालित्व च क्रत्वर्थत्वम् अत्र स्वय प्रार्थितत्व पूर्ववत्, उद्देश्यताविधेयते च स्वरूपसम्बन्धरूपे नतु साध्यत्वानुष्ठेयत्वात्मिके । एतेन कालादौ अनुष्ठेयत्वाभावेपि नाव्याप्ति । न वा पुरुषार्थेष्वभ्यनुज्ञाविधिषु दोषाभावोद्देशेन तत्तत्क्रियाविधानेप्यव्याप्ति । आधानाध्ययनयोस्तु स्वयप्रार्थितभिन्नार्थज्ञानोद्देशेन विधानात् क्रत्वर्थत्व स्वीकारेपि न दोष ।

(अनुवर्तते)

लेसिङ्नाम्नो जर्मन्महाकवेः

# अमीलिया गलेत्तिरिति नाटकम्.

---

प्रथमाङ्कः

विरुद्धैर्भावैर्या चिरमविकृता सूनृतपथे
निरोद्धुं स्वात्मानं प्रभवति हठादन्यवशगा ।
शरीरं त्यक्त्वापि प्रथितयशसा जीवति मुदा
मतिस्तादृग्वस्याद्विगतविपरीतार्थकलना ॥

(नान्द्यन्ते सूत्रधारः)

आदिष्टोऽस्मि पाश्चात्यविद्यापारावारपारङ्गतयाऽनया परिषदा— "भयानकरसप्रधानं अभिनवं नाटकमभिनेतव्यमद्य भवते' ति । तदिह नटीमाहूय पृच्छामि 'किं तादृशं नाटकं' इति—आर्ये इतस्तावत्—

नटी—आर्य, इयमस्मि आज्ञापयतु भवान्

सूत्र—सहृदहृदयाह्लादकं किं तावदाधुनिकं भयानकरसप्रधानं रूपकम्?

नटी—पाश्चात्यमार्गानुयायिनः पाश्चात्यप्रपयैव समाराधनीया तदिह लेसिंग्नाम्नो जर्मन्महाकवेः "अमिलिया गलेत्ति" इति यत्प्रसिद्धं नाटकं तत् शामशास्त्रिणा संस्कृतभाषायामवतारितम् तत्प्रयोगार्हम्

सूत्र—साधु. स्मारित. किं तन्नाटकेषु श्रेष्ठम्?

नटी—श्रेष्ठता न वस्तुगुणः. किन्तु यदिष्टं तच्छ्रेष्ठमिति मनोगुण

यत —

"तच्छ्रेष्ठमिति गृह्णाति स्वेप्सित मर्वदा जन. ।
यथा लेखेषु राजाऽय प्रियानामाङ्कित मुदा ॥"

सूत्र —साधूक्तमार्ये, साधूक्त अमिलियेति प्रियानामैकदेशाङ्कित-मनिष्टमपीष्टमिव राजाय गृह्णाति पत्र. लोकप्रकृतिरिय तदिहानन्तरकरणीयाय सज्जौ भवाव·

(इति निष्क्रान्तौ)

———

ततः प्रविशति राजा

(मञ्चोपरिस्थापितेषु लेखेषु अमिलिया ब्रूणेषि इति नामाङ्कित लेख गृह्णन्)—

"काचिदिय अमिलिया ब्रूणेषि [1] न तु अमिलिया गलेत्ति [2] सर्वाण्येतानि पत्राणि दुःखावेदकान्यथवा याच्ञापत्राणि. राजकार्य सर्वदा क्लेशभूयिष्ठम् तथापि राजपदव्यै सर्व स्पृहते, स्पर्धते च यदि राज्य सर्वोपकारसाधनमेवस्यात्, तदा सर्वेषामपीप्सितमेव स्यात्। किं तावदेषा ब्रुणेषिरपेक्षते ?" (तूष्णीं वाचयति)—"बहु प्रार्थित. - तथाप्यमिलियेत्य· भिधीयते"—प्रार्थित दत्त (इत्यधो लिखति) [घण्टानादेन संज्ञापित· दूत आगत्य राज्ञ· पुरस्तात् तिष्ठति].

राजा—किं मन्त्रिणामेकोऽपि नाद्याप्यागत· ?

दूत —न कोऽपि.

---

[1] ब्रुणेषि दुःखनिवेदिकास्त्री [2] अमिलिया गलेत्तिरिति काचन सुन्दरीस्त्री तस्यां राजाऽनुरक्त

राजा—उषस्येवाद्याहमुत्थित प्रभातमतिरमणीयमद्य बहिर्जिग मिषामि प्रभुर्मरिनर्लि मामनुयातु स आहूयताम्

दूत. निष्क्रान्तः

राजा—न शक्नोम्यद्य किमपि कर्तुम् विश्रान्तोऽहं! श्रान्तमात्मान मन्ये –दरिद्रापि वृणेषिरियममिलियेत्याख्यायते! मम शान्ति रस्तङ्गता परास्ता सर्वं गतमेव

दूत (प्रतिनिवृत्य)—मरिनार्लि प्रति जन प्रेषित अय तावदार्सिनाया [1] लेख

राजा—(लेख स्वीकृत्य) आर्सिनाया लेख? तिष्ठत्वत्र. (इति मञ्चस्योपरि लेख निक्षिपति)

दूत —तस्या दूत प्रत्युत्तर निरीक्षते

राजा—यथाकाल उत्तर प्रेष्यते कुत्रास्ति सा? पत्तने वा स्वग्रामे वा?

दूत —ह्यस्तावत्पत्तनमागता सा.

राजा—कष्टम् —सुखमित्येव वक्ष्यामि तस्याश्चर प्रत्युत्तर निरीक्षताम् मम प्राणवल्लभा आर्सिना — (इति लेख हस्तेनादाय)—अवाचितमेव वर —(इति पुनस्तत्रैव निक्षिपति) सा मय्यनुरक्तेति विस्रब्धोऽहमास. किं किं न सम्भावयति जन.? अह तस्यामनुरक्त इति तु सत्यम् अपि तु सा मयि?

दूत.—चित्रकारस्सान्तिरायात..

राजा—सान्तिः? साधु स आगच्छत्वत्र. स मम मनासि विषयान्तरचिन्तां जनयेत्.

---

[1] आर्सिना पट्टमहिषी

## द्वितीया भूमिका

(तत. प्रविशति सान्ति.)

राजा—सुप्रभात सान्ते. अपि कुशलम्? चित्ररचना कथमास्ते?

सान्ति·—चित्ररचना वृत्तिरेव केवलम्.

राजा—चित्ररचनया तथा न भवितव्य. सर्वथा तथा न भवितव्यम् तथा खलु ममाभिप्राय . तथापि चित्रकारै. चित्ररचना कर्तव्यैव.

सान्ति—उद्योगः? चित्रकारस्य उद्योग ईप्सितः एव. यश. प्रेप्सुना कष्टान्यपि कार्याणि कर्तव्यान्येव.

राजा—न बहूनि कार्याणि. किं त्वेकमेवकार्यं. अल्पमपि सुष्ठु कार्यमिति मन्ये. सान्ते न शून्यहस्तोऽत्रायातस्त्व?

सान्ति·—राजन्, यच्चित्रलेखन त्वयाज्ञप्त तदिहानीतम्. किं च यत्त्वया नाज्ञप्त तदपि दर्शनीयमित्यानीतम्.

राजा—चित्रलेखन मयाऽऽज्ञप्त? न स्मरामि.

सान्ति·—आर्सिनाया भावचित्रमाज्ञप्तम्.

राजा—सत्य तत्तु पुरा

सान्ति.—सुन्दर्य स्त्रिय. न सर्वदा चित्राय तिष्ठन्ति. आसीना मासत्रय प्रार्थ्यमानाऽपि न लब्धक्षणाऽऽसीत्.

राजा—कुत्र ते चित्रे?

सान्ति·—इहैव कक्ष्यान्तरे आनयामि तावत्.

---

## तृतीया भूमिका

राजा—तस्या भावचित्रं? किं सैवेय? तदप्यत्र चित्रे पश्यामि यत्तस्या गात्रे नापश्य. कुशलाश्चित्रकारा·. सा तुभ्यमुत्कोचमदादिति मन्ये. इदमन्यच्चित्र अन्यैर्वर्णैरन्यस्यां भूमि-

कायामारचित मम हृदि निवास लब्धुमर्हति तदेव मा-
माह्लादयति यदाह प्रीतस्तदाह हृष्ट उदारः लघुप्रसरश्चास्मि
न दूरोऽहमेतादृशभावाना प्रीतो वा क्रुद्धो वा नाह प्रीतिबाह्यः.

---

### चतुर्थी भूमिका.

सान्तिः—(चित्र हस्तेन दर्शनार्हं प्रदर्शयन्) राजन् कक्ष्यान्तस्स्थापितानि भावचित्राणि परीक्षस्व. सौन्दर्याणां विपरीता भावा' सौन्दर्यमर्यादामतिक्रामन्ति. गच्छतावत्कक्ष्याप्रदेश.

राजा—(मनसा ध्यायन् विमृशन्) रम्यमतीव रम्यम्. सान्ते, एतत्तव शिल्पकलानुरूप, तव चित्रलेखनशलाकार्हं. अथाप्येतत्सहजरूपमतिशेते, बाढमतिशेते.

सान्तिः—प्रकृतौ न चित्रसौन्दर्यं भाति अथापि वस्तुतः चित्रं शिल्पमर्यादामतिक्रम्य न प्रकृतिरूपमतिशेते. चित्रकारा यथाप्रकृति चित्रयन्ति. चित्र चिन्तयतीव विना चिन्तादिदुःख. भावावबोधनं हि न चित्रोपयोगी वस्तुगुणः. देशकालौ हि चित्र विकुरुतः.

राजा—प्रकृतिर्यथा तथा वा भवतु. कुशलश्चित्रकारः निपुणाच्चित्रकारादधिकां चातुरीं दर्शयति.

सान्तिः—राजन्, क्षमस्व तावदस्माकमतिक्रमं. प्रकृतिस्तावदस्माक प्रमाणार्हे. कश्चन देही. तस्य भावाबोधनं यथाशक्ति चित्रे दर्शयामः—

राजा—उत्कोचप्रोत्साहितेन भवता यत्कृतं तद्विना—प्रकृतिः चित्रं वीक्ष्य किमवदत्?

सान्तिः—अहं सौम्यदर्शना, यदाहं विगतकोपाऽस्मीति.

राजा—विगतकोपा? किं प्रकृतिर्विगतकोपाप्यस्ति.

सान्तिः—भावान्तरे सा तथावदत् वस्तुतः तस्याश्चित्रमेतत् न कोपभावं कोपचिह्न सूचयति.

राजा—तदहं वदामि प्रकृतिरूपमतिक्रम्येयमल चित्रितेति. यदत्र गाम्भीर्यं महत्वं च पश्यामि तत्प्रकृतिसुन्दर्य एवार्हन्ति. सुन्दर मुख तिरस्कारावलेपावुद्धरादेव चित्रितमपि सुन्दरतरमेव भवति तथापि प्रकृतिविपरिता इयमार्सिनाया. प्रतिकृति. कुत्सितरचनासु गणनीया. अत्र हि नयने दुश्शीलाः कामिनीरवधीरयत. नैनादृश भाव आर्सिनाया सहजनेत्रे दर्शयत .

सान्ति —राजन्, आश्चर्यभर्त्सितोऽस्मीदानीम्

राजा—कुत्राश्चर्यम्? यथान्यः चित्रकार. आर्सिनाया विशाले प्रोद्धूते तिरस्कारपूर्णे निश्चञ्चले नेत्रे चित्रे दर्शयितु शक्नोति तथैव त्वमप्यकार्षी ते हि नेत्रे त्वया सुन्दरदर्शने कृते, न केवल सुन्दरे. किन्तु सुन्दरतरे—इदं तावदत्र त्वया वक्तव्य—एतच्चित्र दृष्ट्वा आर्सिनाया. शीलं निर्णेतु शक्यते किमिति. अत्र ह्यवलेप· गाम्भीर्ये, उद्धतत्व स्मिते, चिन्ताक्रान्तता मृदुहृदये च परिवर्तित दृश्यन्ते.

सान्ति·—राजन्, यथा चित्रकार प्रीतिमाधुर्यादीन् भावान् चित्रे दर्शयति तथैव चित्रं कामिभिर्दृश्यते. अनुराग चित्रकारा· वय नयनाभ्यां दर्शयाम·. तथैव सोऽत्र सूचनीय..

राजा—सत्य, सान्ते. तेन चित्रेण सह त्व मा मासात्पूर्वं किमर्थं नापश्यः? न्यस्यतु तच्चित्रं भवान् दूरे. अन्यत्तच्चित्र किं?

सान्तिः—[हस्तेनादाय तद्दर्शयन्] कन्यायाश्चित्रमेतत्.

राजा—तथैवाहमपि पश्यामि. न सर्वमामूलाग्रमवलोकये. [नेत्रस्थ श्वेतवृत्त दर्शयन्] अत्र हि भाव. पूर्ण· (हृदयमङ्गुल्या निर्दिशन्) अत्र गाढ भाव प्रतिकृति प्रकृतिसादृश्य नात्रोपगच्छति किं? इह हि तव चित्ररचनाकौशल्य श्लाघनीयमिति मम मति .

सान्तिः—श्लाघनीयया चित्ररचनयैव इदमपि रचित किं तु यदत्र चित्रित ततो नान्यो विषय चित्ररचनार्ह .

राजा—तथैवेत्यहमपि शपथ करोमि. सेय चित्रकारस्येप्सित पात्र (इदानीं चित्रकारः चित्रमुपसहरति) किमहमपश्यमत्र? तव चित्रकृतिं? अथवा मम मनस्सङ्कल्प अमिलियांगलेर्त्तिं?

सान्तिः—कथम्? राजन्, किं सा देवस्त्री? त्वया दृष्टपूर्वा?

राजा—न भागत—किन्तु पूर्ण सप्ताहात्पूर्वं सायं सम्मेलने तस्या मात्रा सह सा दृष्टा. तदनन्तर अस्मिन्पवित्रे पत्तने मदागमनात्पूर्वमेवायाता सा मम लोचनासेचनकमासीत्. तस्या पिताऽपि मम ज्ञातपूर्व एव स नेदानीं मम मित्र. पुरा तथासीत्. स ममाज्ञां उल्लङ्घयामासा स चैको वृद्धो योध.. अवलिप्त· कठिनहृदय·. अथापि सत्यशील साधु·

सान्तिः—तस्या· पिता! अथात्र सा एकैवास्ति.

राजा—दिष्ट्या अत्रैव मुषित दर्पणमिवास्ति सा. (किं चिच्चित्र पश्यन्) किमद्य जानासि यन्न कोऽपि श्लाघनीयं चित्रकार श्लाघीयितुं विस्मरतीति.

सान्तिः—तथापि नाहं तृप्तोऽस्म्येतैश्चित्रै . अतृप्तिरिति मम सन्तोष एव. किं च न वयं नेत्रे निमील्य चित्ररचनां कुर्मः. दृष्टिं विना केवल लेखनीकरकौशल्येन चित्रे क्रियमाणे

महती न्यून्यता सम्भवेत्. यद्यथोक्त मया तत्तथैव. यत्र न्यूनतादोषः प्राप्त· यथा वा सप्राप्त, कथ वा प्राप्त.—इति तदेतत्सर्वं विचार्यते एव. अस्मात्कारणात् दृष्ट्वा एतच्चित्र "चित्रकारेष्वह वरिष्ठ" इति नाहमवलिप्तोऽस्मि. अपित्वन्यैम्तथा श्लाघितोस्मि नापि मम हम्तकौशल्यं तथा म्तुत्यर्हं. इदमत्र त्वयाऽवगन्तव्य यत् राफेल्नामा प्रसिद्धः रोमन् चित्रकारोऽपि प्रथितयशा नाभविष्यत् यदि दुर्दैव-वशात्स हस्तकौशल्य विना प्रादुरभविष्यत्. राजन्, किमिद-मवगत भवता ?

राजा—(चित्रे लीनमना ) किमुक्त भवता सान्ते ? किं तावन्मयाऽ-वगन्तव्यमिच्छसि ?

सान्ति —न किमपि न किमपि शव्दा एव केवल श्रूयन्ते. ज्ञातम्-—तवात्मा तव नयनयोरिदर्नीं तिष्ठति एतादृश आत्मा एतादृशे नयने च मम प्रियाणि.

राजा—(निरालम्ब इव) सान्ते, किं भवान् अमिलियां गलेत्तिं अस्मत्पुरसुन्दरीषु गणयति ?

सान्ति —कुत्र ? अस्मत्पुरसुन्दरीषु ? किं ममाभिप्राय त्व तिर-स्करोषि ? अथ वा—

राजा—प्रियमित्र, सान्ते, (चित्रमवलोकयन्) किं वय अस्माक नेत्रे श्रद्धधाम ? सत्यमिद वक्ष्ये यत्सौन्दर्य निश्चेतु चित्रकार एक एव समर्थ इति.

सान्ति —किमुक्त ? सौन्दर्यनिर्णयः चित्रलेखकेनैव कार्य इति. मठेषु यत्सौन्दर्यं तस्य निश्चय मठाधिपतयः किं अम्मभ्योऽ-वगच्छन्ति ? राजन्, भवत· पुरस्तात् चित्रकाराणां च

परोक्षे वच्मि—यदा सा अमिलिया गलेचिः मम पुरस्तात् चित्रायऽतिष्ठत् स क्षण. मम यावज्जीवितकालेऽपि निरतिशयाभ्युदयकाल आसीदित्यह मन्ये—इद शिरः इदं मुख, इमे भ्रुवौ, इमे नयने, इय नासिका, इदमोष्ठ इमौ कपोलौ, अय कण्ठ इद वक्ष, इयमवयवसस्था—सर्वमिद गात्र मम चित्रशालाया तस्मिन् क्षणे युवतिललामोपमानमिति निरचिन्व यस्यै प्रतिकृतये साऽस्थात् सा तस्याः पितुर्हस्त गता. इद तु प्रत्यन्तरम्.

राजा—(सान्तेरभिमुखो भूत्वा), प्रत्यन्तरमिति नोक्तम्.

सान्तिः—तस्या एव प्रत्यन्तरम्. यदि त्व तस्मै स्पृहयसे तर्हि—

राजा—इद तावद्युवतिललामसौन्दर्यं मदीय कर्तुमिच्छामि यदि त्व तत्प्रतीच्छसि, तर्हि चित्रसन्निवेशबन्धनायैवेति जानीहि

सान्ति—तथास्तु

राजा—तथा सुन्दर तथा गम्भीरप्रकृति इद मम चित्रशालार्हं.—अथ वा—अत्रैवैतात्तिष्ठतु नेद भित्तौ स्थातुमर्हति. किं तु हस्तेनैव धार्यं—सान्ते, त्वामह वन्दे बाढ वन्दे. यथा मया पूर्वमुक्त "चित्रकर्म न केवलमुदरभरणाय साधन" मिति, तत्तथैव. अथवा यावदह जीवामि तावद्वा. आहूयतां मम कोशाध्यक्षः. स ददातु तुभ्यं तावद्धनं यावत्त्वमपेक्षसे. यावदपेक्षित तावद्दृश्यताम्.

सान्तिः—राजन्, अयं तावन्मम सन्देह यत्त्वया मह्य दीयते तत्र चित्रादन्यन्निमित्त अथवा चित्रमेव तत्र निमित्तम्?

राजा—सभयात्मान चित्रकारा. सान्ते नैव तथा. श्रूयतां, तावद्यावत्त्वमपेक्षसे.

(निष्क्रान्तः सान्तिः)

---

### पञ्चमी भूमिका

राजा—(चित्राभिमुखो भूत्वा)—तावद्यावत्स अपेक्षते–त्वामहंक्रीणामि येन केन वा मूल्येन अहो रमणीय फलं चित्ररचनायाः! सत्यं रमणीयमेव. त्वामहं मदीया करोमि. जगति सौन्दर्यस्य मातृभूमिं त्वा को वा न भजते? किं वा त्वमपेक्षसे, आर्ये, मात , किं वा त्व मूढबुद्धे पित' अपेक्षसे, वद द्रुत वद द्रुत. सुन्दरि, त्वामह त्वयैव क्रीणामि. महता अर्घेण अहो नयने प्रेमरसार्द्रे, तदिद मधुरं मुखं, कदा वा तत्सल्लापाय विवृतं स्यात्! अहो पादशब्द इव श्रूयते! अहं त्वां त्यक्तु न शक्नोमि (इति चित्र पेटिकाया निक्षिपति.) प्रायेण मरिनलिना भवितव्यम्. अद्यापि स नाहूत कीदृशमेतत्प्रात परिणमिष्यतीति न जाने.

---

### षष्ठी भूमिका.

मरिनलि.—महाराज, क्षन्तव्योऽह प्रातरेव मा प्रति सन्देशं प्रहिणोषीति मया न ज्ञातम्

राजा—बहिर्गन्तु ममोत्कण्ठा समासीत् इदानीं तृषसो रमणयिता निर्गता. ममाभिलाषोऽप्यस्त गत'. मरिनले, श्रोतव्या कापि वार्ताऽस्ति?

मरि—न किमपि श्रोतव्यं मम विदितम्. आर्सिना हि ह्यः पत्तनं प्राप्ता.

राजा—अत्रास्ति तस्यास्सौप्राभातिक पत्र (इति पत्रमादाय दर्शयति). अथ वा यत्किञ्चिदेतत्. तस्या वृत्तान्त श्रोतु ना हमातुर.. किं भवांस्तामापृच्छ्यागत.?

मरि—तस्या मयि नातीव विस्रम्भ.. यद्यन्यस्त्रीविषयकोऽय वृत्तान्तः,
यदि च तस्यां त्वमासक्त तदा—

राजा—नाह तथा शपथ करोमि

मरि—सत्य, यदि आर्सिना त्वयि न सापराधा

राजा—बाढ सा मयि सापराधा तस्या मयोद्वाहादारभ्य सा
शठा मया कलहतत्परा समासीत्

मरि—यदीत्थ, तर्हि तयैव त्वत्क्षमा प्रार्थनीया

राजा—तदेव कष्टम् मम हृदय राज्यकार्ये मग्न, सा तु स्वमन
स्ववशे कर्तुं शक्नोमि किं तु सा न तथा करोति.

मरि—किमर्थं मनस्सङ्गः कार्ये इति सा पृच्छति. बाढ कळत्रं
त्यक्त्वा स राजा राज्ये व्यापृतोऽस्ति कळत्रमपि तस्य
प्रिय न भवतीति सा ब्रूते.

राजा—किमन्यत्रानुरागस्तस्या? किं सा विवाहबन्धमोक्ष चिकीर्षति?

मरि—यस्या सकरुणं वचन मयेदानीमानीत तयाऽलं. बहुसा
मयि कारुण्यमुदपादयत् न सा त्वत्सम्बन्धमाधिकृत्य
किमप्युवाच तत्र मुद्रितवदनैव साऽऽसीत् त्वत्तो विमु
खायास्तस्या हृदयानुबन्धोऽन्यत्रास्तीति मन्ये. सा खलु
स्मेरवदनैव दुःखमकथयत्. खिन्नवदना सुखविषयान्वर्ण-
यामास. यथा सा पुस्तकेषु निमग्नमना अभवत् तदपि
सा अकथयत्. पुस्तकान्येव तस्या शान्तिभवनमिति मन्ये.

राजा—मूढबुद्धेस्तव सा तथा अदृश्यत किम्? तस्या यो विषयान्तरानु-
राग', मा भवांस्त नाशयत्. नापि मां तदभिमुख करोतु,
यथा सा प्रीतिविषये मूर्खा तथा प्रीत्यविषयेऽपि मूर्खैव. तस्याः
प्रसङ्गेनाल. किमन्यत्कथनीय वर्तते? पत्तने कोऽप्युदन्तः?

मरि—सन्नपि असन्नेव. श्रीमतोऽपियानेर्विवाहोऽद्य निश्चितः. स च सन्नपि असन्नेव.

राजा—अपियाने ? कया साकम् ? तच्छ्रोतुमिच्छामि. किं कन्या निश्चिता ?

मरि—स च विवाह गृहाभ्यन्तर एव क्रियते. अल्पमपि बहू-क्रियते. राजन् . त्व हससि. तथापि तथैव तत् काचन विना सौन्दर्य विना चैश्वर्योन्नतिं अपेक्षतेऽन्यं स्ववशे कर्तुं, कुरूपमाच्छाद्य. सौन्दर्य प्रदर्शयन्ती भावविलासेन बुद्धिशक्त्या च किमिद दुर्गम ?

राजा--यो भावस्सहजसौन्दर्येण मनस्याविष्कृतः तत्को वा मोहेन तिरस्कुर्यात् ? एतादृश. सहजानुराग श्लाघनीयो न त्वप-हसनीय । कथमाहूयते स पुण्यशाली ? यथा त्व तस्य शोचनीयस्तथा न शोचनीयस्स ते स खलु भवतोपि श्रेयान्. गरीयाश्चेत्यह मन्ये त मम नियोज्य कर्तुं मयि चिरा-दभिलाषो जागर्ति. तदेवेदानीमपि चिन्तयामि.

मरि—इदानीमपि कालो न गत . स च स्वगृहे एव भोगान्भोक्तु न निश्चितमना इति मया श्रुतम् किमेतस्मादपि प्रशस्यतरं कार्यम् ?

राजा -आस्ता तावत्कुटुम्बसौख्यप्रसङ्गः यत्र आचाराः, विषय', जुगुप्सा, आशा च जनान् बन्दीकुर्वन्ति. किंनामधेया सा, या ईदृशभाग्य तस्मै उपाहरति ?

मरि—अमिलिया गलेत्तिरिति.

राजा—किं ? किं ? सत्यम् ?

मरि—अमिलिया गलेत्तिरिति

राजा—नैव सा.

मरि—नात्र सन्देह..

राजा—न तथा, नैतत्तथा. कथमेतत्तथा भवेत्? नामधेये अनृतमेव. गलेत्तिरिति सत्य स्यात् अमिलियेति तु न सत्यम्.

मरि—अमिलिया गलेत्तिरिति

राजा—तत्र नामद्वय वर्तते. नैकमेव. त्व तु एका सेत्यात्थ. न कोऽपि मूढ नामद्वयमेकं कर्तुं शक्नोति.

मरि—राजन्, सत्य तत्

राजा—अह पृच्छामि किं सा अमिलिया गलेचिरित्याख्यायते? किं सा गलत्तेर्दुहिता?

मरि—तथैव.

राजा—सा, या स्वमात्रा अत्र पत्तने वसति.

मरि—तथैव.

राजा—देवालय निकषा

मरि—तथैव.

राजा—किं बहुना (चित्रमानीय) किमियं सा?

मरि—तथैव.

राजा—किं सेयमद्योह्यते?

मरि—अपियानिना.

राजा—(चित्रं निक्षिपति).

मरि—विवाहश्च तस्याः पितुः शान्ते ग्रामसदने करिष्यते. अद्य मध्याह्ने, सा, तस्यामाता, अपियानिः प्रायेण केचन सुहृदश्च तत्र यास्यन्ति.

राजा—(आसने पतित्वा) तर्हि अहं त्यक्त.—नाह जीवामि!

मरि—महाराज, किं तेन ते?

राजा—स्वामिद्रोहिन्, "किं तेन मे?" अहं तस्यां बद्धानुरागः.

अद्यापीदं तया ज्ञेयम्? आर्सिना अपियानिश्च मया शृङ्खलाबद्धौ बन्धनागारे निक्षिप्येते. मरिनले आवयोर्या मैत्री सा दृढा कार्या भवता. यदि भवान् अस्मिन्क्षणे मामापदो न निस्तारयिष्यति, तदा भवान् सत्यात्पतित्वा ममापकर्ता भविष्यति राज्ञां मित्राणि न सन्ति. मम प्रियापहार खलु मम घोरा आपत्. भवतोऽन्यं न कमप्यपकर्तारमह क्षमे.

मरि—राजन्, ममाश्चर्यं वर्णयितुमुचितानि पदानि दुर्लभानि. किं भवानमिलियायां गलेत्त्यामनुरक्तः? किमिदं सत्येपु सत्यम्? यद्यहं तवानुरागस्य लेशस्यापि ज्ञाता स्या, तदा न दैव नापिचेश्वर· तस्य ज्ञाता स्यात्. आत्मसत्येन आर्सिनामपकरोमि. तव मयि सन्देहोऽद्यापि प्रसरति

राजा—मरिनले, क्षमस्व मां, रक्ष मां.

मरि—महाराज, जानीहि अचिरात्फल त्वां सान्त्वयतीति. यदि राजान न मित्राणि प्रेप्सन्ति तदा तेषां न मित्राणि सन्ति. अद्य दूतकर्मण्यनुजानीहि मा. निधेहि मां तव हृदये. द्रक्ष्यसि मत्तोऽन्य· सन्देशार्हो नास्तीति.

राजा—आत्मन्येव सशयानोऽह कथ त्वा श्रद्दधीय?

मरि—यद्यात्मनोऽन्य कर्तार नानुमन्यसे तर्हि आत्मनो द्वितीय मां मत्वानुजानीहि.

राजा—पुनस्तया सल्लापं कर्तुं मम सर्वोऽपि यत्नः व्यर्थएवाभूत्.

मरि—प्रथमप्रयत्नस्तथा.

राजा—अह सल्लापमकार्षं. हा! इदानी महं प्रबुद्धः. त्वामहं सर्वं कथयामि. चिन्तातरङ्गक्षोभितान्तरङ्गं मां त्वामपश्य. यथा त्व मामपश्यस्तथैव तदाहमास. रक्ष मा यदि शक्नोषि.

मरि—रक्षणीय किमत्रास्ति यत्प्रबोधनाय गलेत्तिस्त्वया न कथिता, तदपियानिना सा कथिता. बुद्धयस्व तावत्—न कोपि प्रथम-यत्नेन वस्तुसर्वस्व क्रेतुं शक्नोति द्वितीयेन तु सफलो भवति सर्वस्वक्रयश्च न तावत्साक्षात्सर्वस्वविक्रेतु , किन्तु प्रतिभूद्वारा

राजा—किं तथ्य तथ्यम्?

मरि—सत्य भो सत्य

राजा—निर्लज्जोऽसि'

मरि—यद्यपियानि पण्यसर्वस्वेन देशान्तर यास्यति, तदाप्यन्य. कश्चन चिकीर्षित साधयत्येव

राजा—चिकीर्षित? मम प्रीतिभाजन. भवान् मद्य चिन्तयति किम्? यद्यहमेव त्व, तदा यत्करोषि तत्—

मरि—अह नैव यत्न व्यर्थं करोमि

राजा—चिकीर्षितसाधनाय तव शक्तिरस्तीति नाह सिद्धि निरीक्षमाण प्रीणामि. अद्यैव करोमीति वद. द्रुत सद्य एव

मरि—प्रथममद्यैव प्रथम तत् भावीति न प्रबोधनार्हं. यद्यदत्र अह करोमि तत्सर्वं तवानुमतम्?

राजा—सर्वं तत् यन्मम घात निवारयिष्यति

मरि—कालात्यय विना विसृज मां किं च माऽस्वात्र पत्तने. अद्यैव दोसलद्वीपे वर्तमान तव सुखप्रासाद याहि तस्य मार्गः काखियनटपत्तन निकषा याति अपियानिं वशीकर्तु प्रथमयत्न. यदि न सिद्धयेत्, तदा—सोऽस्माक जाले पति-ष्यतीत्यहं मन्ये तव विवाहाय मित्राण्यानेतु माफपत्तन प्रति दूतः प्रेषणीय. स च दूत अपियानेर्नान्यः. तेन चावश्यं विवाहकाले आगन्तव्यमिति आज्ञा कार्या. किमवगतम्?

राजा—साधु. साधु. आनय तमत्र. त्वरयस्व. अहमपि रथमारोहामि.

---

## सप्तमी भूमिका.

राजा—सत्वर सत्वरम्! कुत्रास्तितत्? (चित्र मार्गयन्) अध-स्तादेव तद्वर्तते तत् मन·खेदाय. (चित्रमादाय) प्रथमं तावत् भवती मया न साधु दृष्टा. व्रणस्योपरि शस्त्रपातः! सा सम्यक् दृष्टचरैव यथा तृप्ति· तथैव दृष्टा. किंतु दर्शनानन्तर यत्कार्यं तन्न कृतम् निरुद्योगेन मया सर्वं नाशितम्. अद्यापि सर्वं नष्टं, यदि मरिनलेर्यत्नः न सिद्ध्येत्? किमर्थं मया सर्वोऽपि भार· तस्य मूर्ध्नि न्यस्त·? तच्च कार्यं मम अस्यामेव घटिकायां सा सुन्दरी विवाहबन्दमन्त्रान् पुरोहितमुखात् श्रोतु देवालय याति. किं स्यात्? यद्यहं तत्रैव तया सल्लाप कर्तुं यते? अद्यैव तस्य विवाह! तस्या हृदये अन्यो भाव· किं नोदयेत्? (घण्टां नादयित्वा मञ्चादेक पत्रमादाय), कस्तुभ्य[1] ब्रूते? मन्त्रिणा कस्तत्रास्ते?

दूतः—कामिल रोत.

राजा—स आगच्छत्वत्र. अद्य तेन कालक्षेप न करोमि. स सर्वदा संशयात्मा काल नयति. इदानीं न तथा कार्यम्. अत्रास्ति अमिलियाया ब्रूणेषे· पत्रम् ब्रूणेषे, साधु, कुत्रास्ति ते साहाय्यम्?

---

1 ब्रूणेष्यै.

अष्टमी भूमिका.

(तत प्रविशति कामिल रोत', राजा च )

राजा—रोत, आयाहि. अत्रास्तीदं, यत्प्रातर्मम हस्तङ्गतमुद्घाटित च पत्रम्. रमणीयमिदम् यत्कर्तव्यं तत्त्वमेव चिन्तय. स्वकिुरु.

रोतः—साधु, महाराज.

राजा—इद तावत्पत्रं अमिलियाया गलेत्ते', न ब्रूणेषे. इति मया वक्तव्यम्. यन्ममेष्ट तदत्र लिखितम्. इदमत्यल्पम्. इद यथा साधितं स्यात् तथा कुरु अथ वा मा कुरु, यत्तुभ्य रोचते.

रोतः—नैव यथा मह्य रोचते.

राजा—तर्हि यदुचितं तत्. किमपि लेखनीयम्.

रोतः—अधस्ताल्लेखनं मरणशासनमिव.

राजा—तथापि वरम् त्वरस्व

रोतः—मरणशासनमिति मयोक्तम्.

राजा—मया श्रुतम् तन्न सम्भवेत् मया शीघ्र गन्तव्यम्.

रोतः—(स्वहस्तस्थानि पत्राणि वीक्ष्य) मयैतानि न सम्यक् परामृष्टानि. क्षमस्वराजन् आ श्व प्रात. एतानि तिष्ठन्तु

राजा—तथा वा? एतानि एकत्र मिळितानि स्थापय. मया गन्तव्यम्. श्व प्रातः. किमन्यद्वक्तव्यम्? (इति गच्छति).

रोतः—साधु मरणशासनम्. (पत्राण्यादाय बहिर्गत्वा) क्षिप्रमविमृश्य लिखितम्? अस्तु तत् मम एकस्यापि पुत्रस्य घातकाना दण्डनार्थं मरणशासनम्, तदप्यविमृश्य सद्य एव लेखितुं राज्ञोनुमतिर्न कदापि मया दीयते. इदमपि मरणशासनं राज्ञा लिखितं तादृशमेव. तन्मां ममात्मान परं तुदति घोरमेतत्

(अनुवर्तते)

# वेदार्थसंग्रहप्रमेयसंग्रहः.

---

नमो रामानुजाचार्याय तस्मै वेदार्थसग्रहम् ।
विशिष्टाद्वैतसिद्धान्तस्योपन्यास वितन्वते ॥
वेदार्थसंग्रहस्यास्य प्रमेयानुक्रमोदयः ।
विशिष्टैकार्थसंसिद्धचै लिख्यते कृतिनां कृते ॥
शास्त्रैकदेशसम्बद्ध शास्त्रकार्यान्तरे स्थिरम् ।
आहुः प्रकरणं नाम ग्रन्थभेद विपश्चित' ॥
पुराणवाक्यमेतत्स्यात् तत्र कार्यन्तरं पुनः ।
सक्षेपः शास्त्रकार्यं तु विस्तरस्सम्मतो बुधै ॥
मङ्गलं प्रथमे पद्ये श्रौत विष्णोरुपासनम् ।
आर्थ स्वमतसंक्षेपः ह्युपायोपेयलक्षणः ॥
लीलाभूति· नित्यभूति' तथैवोभयलिङ्गता ।
उपासनं च क्रमश· पादानामर्थ इष्यते ॥
द्वितीये मङ्गल श्रौत गुरूपासनलक्षणम् ।
प्रबन्धारम्भसंरम्भसूचन च हृदि स्थितम् ॥
विवर्तः प्रथम· पक्ष पारिणामस्ततः परः ।
भेदाभेदस्तृतीयस्स्यात् परपक्षा इमे त्रयः ॥
जीवेशयाथात्म्यबुद्धिपूर्वकर्मपरिष्कृता ।
उपायो भक्तिरेव स्यादुपेयो भगवान् हारि' ॥
भगवद्वैभवपरं शास्त्र तदखिलं मतम् ।
द्विलिङ्गो द्विविभूतिर्हि भगवानुररीकृतः ॥

निर्विशेषपर भेदनिरासपरमेव वा ।
सकल शास्त्रमिति हि विवर्तैकान्तनिर्णयः ॥
तत्त्वमस्यादिवचनं विषयीकृत्य चिन्त्यते ।
न सद्विद्या निर्विशेषपरेत्यादौ निरूप्यते ॥
नापि भेदनिरासेऽपि तत्परेत्यथ वक्ष्यते ।
न तेन पौनरुक्त्यादिशङ्कावसरसम्भव. ॥
प्रक्रान्तार्थपरित्यागात्तच्छब्दोऽस्वरसोऽग्रिमः ।
पदद्वये लक्षणा चोपक्रमोऽपि विरुध्यते ॥
सामानाधिकरण्यस्य लक्षणं न विचारितम् ।
एव चतुर्विधा दोषा अखण्डार्थे निरूपिताः ॥ १५
स्वरूपैक्यशरीरात्मस्थलसाधारण तु तत् ।
सामानाधिकरण्यं हि सङ्गत परिगृह्यताम् ॥
चिदचिद्वस्तुदेहोक्त्या हेयसंसर्गशून्यता ।
लीलोक्त्या च निमित्तत्वप्रयुक्तानिष्टशून्यता ॥
जायेयेत्युत्पत्तिदशा स्यामा जातदशोच्यते ।
सङ्कल्पे साधनं पश्चात् साध्यं पूर्वमिति क्रमः ॥
सार्वात्म्य च शरीरात्मभावेनैवेति कण्ठतः ।
अन्तःप्रविष्टश्रुत्योक्त इतिसिद्धान्तसंग्रहः ॥
त्वमर्थं लोकसंसिद्धमुद्दिश्यात्र तदात्मता ।
विधीयत इति व्याख्या ह्युपसंहारदूषिता ॥ २०
सर्वस्य चैतदात्म्येऽपि शङ्क्येतात्मस्वतन्त्रता ।
विशेषेणोपसंहारफलं तस्याः परिक्षयः ॥
सद्वारकं भगवतश्चोपादानत्वमुच्यते ।
प्रोक्षणस्य पशोश्चापि तदारुण्यगुणस्य च ॥

प्रद्यादिद्वारकत्वेऽपि मुख्यत्व वाक्यविन्मतम् ।
व्यापारिणोन्यथासिद्धि न व्यापारेण हीष्यते ॥
शरीरवाचकाश्शब्दाश्शरीर्यन्ता इति स्थिते ।
वेदान्तश्रवणेनैव व्युत्पत्ति॰ परिपूर्यते ॥
सर्वश्शब्दस्तथाचान्तर्यामिण॰ परमात्मन ।
स्यादपर्यवसानाख्यवृत्तितो वाचको मत ॥ २५
सामानाधिकरण्य तु विशुद्धाद्वैतगोचरम् ।
इत्युक्तेस्तत्प्रतिद्वन्द्वि विशिष्टाद्वैतभाषितम् ॥
निर्विशेषे नैव शब्द॰ नाप्यस्य स्वप्रकाशता ।
ना विद्ययातदाच्छादः नापि प्रत्यक्षगोचर ॥
अनुवृत्त्यशलोपाद्वा सस्कारासचिवत्वत॰ ।
विषयात्वारणाच्चापि निर्विकल्पो विशिष्यते ॥
भेदाभेदे न प्रमाण स्यात्सामान्यविशेषयो॰ ।
समुग्धग्रहण निर्विकल्प स्यादित्यसाम्प्रतम् ॥ ३०
निर्विशेषे तिरोधान नोपपन्नमिहेर्यते ।
सिद्धान्ते सविशेषत्वात् जीवानामुपपद्यते ॥
अविद्याया स्वरूपस्यानुपपत्तिरथोच्यते ।
तत्रान्तरे भवेदेक जीववादनिराकृतिः ॥
निवर्तकनिवृत्त्योश्च कथ्यतेऽनुपपन्नता ।
आश्रयस्यानुपपत्तिरविद्यायास्तथोदिता ॥
प्रामाण्यानुपपत्तिस्तु शास्त्रस्याथ प्रदर्श्यते ।
वादानधीकारवादस्स्यादसद्वादिनामथ ॥
विरोधस्य निरासोऽथ शास्त्रप्रत्यक्षयोरपि ।
द्वितीयेऽथ तृतीयेऽपि पक्षे दोषानुकीर्तनम् ॥ ३५

सर्वस्य भिन्नाभिन्नत्वं निरस्याथ प्रदर्श्यते ।
संस्थानस्यैव जातित्वं भेदत्वं चेति निर्णयः ॥
संक्षेपेण निरुक्तस्य स्वसिद्धान्ते पुनस्त्वथ ।
सामानाधिकरण्यस्य विस्तरेणानुकीर्तनम् ॥
मुख्यः प्रयोगो धर्म्यैक्यात् एकविज्ञानगीस्तथा ।
सोऽयं पुमान् यश्च पूर्वं ज्ञात इत्युच्यते यथा ॥
परिषद्दर्शनेनामी दृष्टा इति यथापि वा ।
यद्वाऽपृथक्सिद्धिरूपसम्बन्धादुपपद्यते ॥
अभिन्नसत्ताकहेतुस्तथोपादानमित्यपि ।
आत्मेत्यपि च पर्यायाः सर्वस्यात्मायमुच्यते ॥ ४०
तज्जत्वादिनियाम्यत्वशरीरत्वनिबन्धनम् ।
आत्मत्वं त्वपृथक्तु स्यात् न नियन्तृत्वमात्रकम् ॥
अपृथक्तु पुनस्तस्मिन्नन्तर्भाव इतीर्यते ।
अन्तर्भावात्मकं चैक्यं तेनैक्यमिति कीर्त्यते ॥
इदमेव हि वैशिष्ट्यं विशिष्टाद्वैतगर्भितम् ।
एतादृशापृथक्सिद्ध्या सर्वं ब्रह्मात्मकं ततः ॥
न पृथक्प्रतिपत्त्यादिरपृथक्सिद्धवस्तुनः ।
ब्रह्मणो वेदने सर्वं विदितं तदपृथक्स्थितम् ॥
परपक्षे बुद्ध्यभेदे त्वभेदोऽनृतसत्ययोः ।
सर्वार्थो वाऽखिलाभावः बुद्धिभेदोऽपि नोचितः ॥ ४५
मिथ्यात्वान्न च साधर्म्यं वैधर्म्येऽध्याहृतिर्भवेत् ।
निवृत्तौ लक्षणा वा स्यात् वैरस्य ज्ञानशब्दयोः ॥
स्थालीपुलाके साधर्म्यं प्राधान्ये तु विधर्मता ।
एवं हि दुष्परिहारान् दोषानिह विदुर्बुधाः ॥

वाङ्मूलव्यवहारार्थ विकारो नाम चेत्यपि ।
मृत्पिण्डेन स्पृष्टमतः मृदित्येषा यथार्थवाक् ॥
वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।
पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता ॥
कार्यकारणभावाच्च शरीरात्मत्वतोऽपिच ।
सामानाधिकरण्येन निर्देश इति निर्णयः ॥ ५०
अथ भेदनिषेधस्य तात्पर्यमवधार्यताम् ।
अब्रह्मात्मकनानात्वनिषेधविषयत्वत ॥
अब्रह्मात्मकमित्यत्र द्विविधो भेद ईप्सितः ।
स्वतन्त्रभेदो लोकस्य भ्रान्तिसिद्ध इहादिम ॥
कार्यकारणभेदश्च कुतर्कायत्त उत्तरः ।
अत्रोत्सर्गापवादादिन्यायत्रयसमन्वय ॥
उपादानमपि ब्रह्म निर्विकारमुदीर्यते ।
शरीरलक्षण सर्वशब्दाना वाच्यतापि च ॥
इद शशरीरात्मभावबोधकश्रुतिमानसम् ।
देहात्मनोर्यथा भेदः यथाचापृथगात्मता ॥ ५५
तथा प्रपञ्चेश्वरयोः ततस्स्यादेककण्ठता ।
भेदाभेदादिभिन्नानां श्रुतीना चिन्त्यतामिति ॥
तथा दारागारधनकेदारादिविलक्षणः ।
विभूतिभावोदेहस्य पारतन्त्र्यपरिस्थितिः ॥
एवं सर्वस्य जगत पारतन्त्र्यनिरूपणे ।
विहाय देहात्मभावं न नो धीगोचरः परः ॥
ततश्च सर्वशास्त्राणामैदम्पर्यसमन्वयात् ।
भेदोऽभेदो ह्यात्मताच सर्वमत्र समर्थ्यते ॥

सर्वप्रकार ब्रह्मैवावस्थित देहिभावत ।
अभेदो रक्षितस्तेन तथा ब्रह्मैकवस्त्वपि ॥ ६०
नानात्मचिदचिद्धातुप्रकारत्वादनेकधा ।
अवस्थितमतो भेदाभेदश्चापि सुरक्षित ॥
चिदचिद्ब्रह्मधातूनां पृथक्स्वाभाव्यतः पुनः ।
स्वरूपेण स्वभावेन भेदश्चापि समर्थितः ॥
न सद्विद्या निर्गुणा स्यात् जीवस्यास्ति स्वतन्त्रता ।
वेदान्ते विष्णुपारम्यं सर्वस्मृतिसमन्वयः ॥
ततोयदुत्तरतरं यद्वेदादौ स्वरस्तथा ।
तस्मिन्यदन्तरिति चेत्यादिश्रुत्यर्थनिर्णय. ॥
उपादान तु भगवान्निमित्त तु महेश्वरः ।
इति व्योमातीतवादः सएवात्र निरूप्यते ॥ ६५
तस्मिन् यदन्तरित्यादौ तच्छब्दो व्योमवाचक· ।
सचाकाशो नामरूपनिर्वोढा विष्णुरुच्यते ॥
तदतीत तदन्तःस्तः स सदाशिव उच्यते ।
इति वादो निराकारि कामाना व्यपदेशत· ॥
विष्णोरथावतारस्स्यात् तथा भारतवर्णना ।
तथा विष्णुपुराणार्थः तत्साराशोवधार्यताम् ॥
विष्णुरेवापरिच्छिन्नः तत्त्व नारायणात्मकम् ।
तत्र चोभयलिङ्गत्व भगवच्छब्दशब्दितम् ॥
तथोभयविभूतित्वं नारायणपदोदितम् ।
पुरुषोत्तमशब्दार्थः चिदचिद्भ्यां विलक्षणः ॥ ७०
सर्वदोषनिरासाय सत्यसङ्कल्पतोच्यते ।
सर्वमङ्गलसंसिद्ध्यै सत्यकामत्वमुच्यते ॥

त्रिमूर्तिसाम्यादिशङ्का ततश्च विनिवार्यते ।
प्राजापत्यमतोच्छित्त्यै मनुस्मृत्यर्थनिर्णय' ॥
वेदान्तशास्त्रसिद्ध्यर्थं सिद्धव्युत्पत्तिरादृता ।
शासनाच्छसनाद्वापि शास्त्रमित्यवधारितम् ॥
साध्योपायैकान्तहतिः सिद्धोपायसमर्थनात् ।
उपासनाख्ये साध्येऽपि तात्पर्यं विशदीकृतम् ॥
कार्यस्य दूषणमथो लिङर्थस्य च वर्णना ।
औपादानिकबोधस्य निरासोयमथो यथा ॥ ७५
विध्याक्षेप उपादान श्रुतार्थापत्तितः पृथक् ।
सा स्यादभिहिता पर्यवसानाच्छब्दकल्पना ॥
अभिधानानवसिति. उपादानमितीर्यते ।
तेनौपादानिकीत्युक्ता फलसाधनतामति' ॥
ततो नित्यविभूतेश्च समर्थनमिहादृतम् ।
अन्तस्तद्धर्मसूत्रार्थ कप्यासश्रुतिवर्णना ॥
सङ्केतमूलो वेदस्स्याच्चेष्टावद्बोधकत्वतः ।
शब्दत्वाद्वा देवदत्तनिनदादिवदित्यसत् ॥
सङ्केतयितुरज्ञानात् सम्प्रदायेऽपि सन्तते ।
बोधकत्वं ततस्सिद्धं स्वाभाविकमिहाक्षवत् ॥ ८०
बोध्यबोधकभावोत्र सम्बन्ध. वृद्धशिक्षित. ।
व्याप्तिलक्षणसम्बन्धात् लिङ्ग गमकमुच्यते ॥
धर्मशास्त्र तु सकल पूर्वभागोपबृह्मणम् ।
पुराणं चोपनिषदामुपबृह्मणमिष्यते ॥
ज्ञानस्यैव विकारोयमिच्छाद्वेषसुखादिक' ।
अनुकूलतया वेद्य सर्वं सुखमितीष्यते ॥

प्रीतिरूपमनुध्यान भक्तिरित्यभिधीयते ।
भक्तिस्सेवोपास्तिरिति नैघण्टुकवचोऽपि च ॥
भज इत्येषधातुर्वै सेवाया परिकीर्तित ।
तस्मात्सेवा बुधै प्रोक्ता भक्तिशब्देन भूयसा ॥ ८५
इतिबोधायनवच॰ विस्पष्ट समुदाहृतम् ।
प्रकाशिकादीमिकयोः श्रीसुदर्शनसूरिभि ॥
परभक्ति॰ परज्ञान परमा भक्तिरित्यपि ।
त्र्यवस्थ साधनं त्वाद्य साक्षात्कार इतीर्यते ॥
स च प्रत्यक्षसदृशमनुध्यानमितीर्यते ।
वस्तुस्वभावज साक्षात्कारेच्छालक्षणं हि तत् ॥
साक्षात्कारः कदाचिद्य परज्ञान तदुच्यते ।
साक्षात्कृतस्यानुभवाभिनिवेशात्मकोऽपि स ॥
अनुभूतिस्तु परमा भक्तिरित्यभिधीयते ।
भवेदनुबुभूषापि सैषा ज्ञेया निरन्तरम् ॥ ९०
तत्राप्यनुभवो नामानुकूलत्वप्रकारकः ।
विशिष्टविषयस्साक्षात्कार सुखरसात्मक॰ ॥
वेदार्थसंग्रहस्येत्थ प्रमेयकुसुमाञ्जलिम् ।
लक्ष्मीपुरं श्रीनिवासो वासुदेवे समार्पिपत् ॥ ९२

## पत्रिकाविषय॰ (स्वविषयः).

I

इदमिदानीं ग्राहकानुग्राहकनिकरचरणसरोजे सादरमावेदयितुं कृतक्षणा वयं—यदस्मत्पाठशालापत्रिकापुत्रिकायाः षष्ठाब्दपूर्तिमहोत्सव श्रीमतामनुग्रहरसभरमनोहर निरवग्रह निरवर्तीति। पत्रिकेय सप्तमवर्षारम्भोत्सवप्रमोदमप्यनुभवितुमुत्सहते श्रीभगवत्कृपया। सानन्दं विलोकयति च विश्व कालोपचितनिजबलसौन्दर्यादिपरिज्ञानेन। नितरा कृतज्ञतापरिपूरितान्तरङ्गा च वरीवर्ति निजपरिपोषणशीलेषु ग्राहकादिमहाजनेषु। अपि चेयन्त काल यथा सदयमात्मान परिपुपुषु श्रीमन्त तथैवेत परमपि पोषयेयुरित्यसकृदभ्यर्थयते विनयावनता॥

पत्रिकेयं विदुषां विद्यार्थिना प्रायो विविधानां सस्कृताभिज्ञानां च मनोहरीणी सहचरी सवृत्तेति प्रियम्भावुकत्वपिशुना ग्राहकेभ्य॰ दूरादन्तिकाच्चास्माभिरधिगता पत्रिकातति विलसति पुरत इति समेषा सम्मोदस्थानम्॥

इदमपरमावेदनीयमस्ति–यदि जननिर्वृत्येकप्रयोजनेयं पत्रिका जातुचिदनवधानतो निजपथादस्खलत्तदपि यथापूर्वं मर्षयन्तु तत्रभवन्तो भवन्त गुणमात्रग्रहणलालसा वाणीचरणसेवाधुरीणाः। गच्छत॰ स्खलनं सम्भवत्येवेति गच्छन् सर्वो हि विजानाति॥

अयि भो भारतीयसंस्कृतविद्वन्मणयः, भवन्तु सर्वमपि भारं विन्यस्य एतत्पत्रिकोद्यमविस्तराश्चिकीर्षित । यो यो जन· यं कञ्चन नवाभिप्राय मनसा बिभर्ति सस· त सद्य समुल्लासयत्वस्यां पत्रिकायाम् । योय यस्मिन् शास्त्रे परिशीलितप्रमेय ससस्तन्मर्म-स्वोपज्ञ सप्रमाण प्रथमं प्रपञ्चयत्वस्या पत्रिकायाम् । अपि च केचन विद्वास· पुराणानेव प्रमेयान् समासरूपतो वा व्यासरूपतो वा वक्तुमभिलषेयु । तेषाञ्चेहावकाशो भूयानस्त्येव ॥

इयमन्या विज्ञप्ति· । ग्राहकास्सर्वेऽपि इमा विद्वद्रुचिरां पत्रिका स्वमित्रेभ्य· प्रदर्श्य तेषामपि ग्राहकत्वं सम्पाद्य यथेयमपूर्वा पत्रिका सकलपौरस्त्यपाश्चात्यसंस्कृताभिज्ञाना करकमले भृङ्गायमाणा सुचिर रुचिर शोभेत तथा अचिरादुपकृत्य च ज्ञानगम्यस्य विद्वत्तमस्य स्वास्तिकृतो लोकाध्यक्षस्य कृपामधिगत्यैधन्ना शरदा शतमिति विश्वतोमुख भद्रम् ॥

II

अस्मिन् वत्सरे सम्पादकीयसमितौ कश्चन परिवर्त· कृतः । अस्याः पाठशालाया· पाठशालान्तर गतवतां श्रीहरियप्पानां स्थान महाविद्वासः ज्योतिर्विदग्रण्य· करूरभिजना· शेषाचार्याः अलङ्कुर्वन्ति । एतेषां स्वागतं ब्रूमः ॥ (सं·)

---

# कांच्यां--श्रीसुदर्शनमुद्रायन्त्रालये क्रय्याणि पुस्तकानि.

## वैदिक ग्रन्थाः.

| न | नाम | रू | आ |
|---|---|---|---|
| 1 | श्रीसूक्तभाष्यम् | 0 | 4 |
| 2 | पुरुषसूक्तभाष्यम् | 1 | 0 |
| 3 | तैत्तिरीयोपनिषद्भाष्यम् | 3 | 0 |
| 4 | सन्ध्यावन्दनभाष्यम् | 0 | 8 |

## वेदान्त ग्रन्थाः.

| न | नाम | रू | आ |
|---|---|---|---|
| 5 | शतदूषणी भा--1 | 4 | 6 |
| 6 | शतदूषणी भा—2 | 3 | 12 |
| 7 | शतदूषणी भा—3 | 3 | 12 |
| 8 | शतदूषणी भा—4 | 3 | 12 |
| 9 | भगवद्गीता प्रतिपदार्थविवरणसहिता | 2 | 2 |
| 10 | भगवद्गीता-वरवरमुनि व्याख्यासहिता | 2 | 4 |
| 11 | गीतार्थसंग्रह -रक्षया सहितः | 0 | 6 |
| 12 | तत्वनिर्णयः (शैववैष्णववादः). | 0 | 4 |
| 13 | सिद्धान्तचिन्तामणिः | 0 | 12 |
| 14 | पाराशर्यविजयः (प्रथमाध्यायप्रथमपादः). | 4 | 0 |
| 15 | वेदान्तविजयः [गुरुविद्याविजः, ब्रह्मविद्याविजय, सद्विद्याविजयः, अद्वैतविद्याविजयः, परिकरविजयः] (यन्त्रस्थः) | | |
| 16 | यतिलिङ्गसमर्थनम् | 0 | 4 |
| 17 | प्रपन्नपारिजातः | 0 | 4 |
| 18 | न्यायभास्करः (जगन्मिथ्यात्वखण्डनम्) | 1 | 8 |
| 19 | भेदवादःतत्कर्तृन्यायविचारश्च. | 0 | 4 |
| 20 | दृश्यत्वानुमाननिरासवादःमोक्षकारणतावादश्च | 0 | 4 |
| 21 | कार्याधिकरणवादः भा—1 | 0 | 10 |
| 22 | कार्याधिकरणवादः भा—2 | 1 | 0 |
| 23 | कार्याधिकरणतत्वम् | 0 | 14 |
| 24 | श्रीरामानुजासिद्धान्तसारः | 1 | 0 |
| 25 | श्रुतितात्पर्यनिर्णयः (यन्त्रस्थः). | | |

## मीमांसा ग्रन्थाः.

| न | नाम | रू | आ |
|---|---|---|---|
| 26 | भाट्टरहस्यम् | 1 | 8 |
| 27 | मीमांसापादुका | 0 | 7 |
| 28 | मीमांसाकौस्तुभः भा—1. | 1 | 4 |
| 29 | मीमांसाकौस्तुभ भा —+. | 1 | 6 |
| 30 | मीमांसाकौस्तुभः भा—5. | 1 | 6 |
| 31 | सेश्वरमीमांसा | 1 | 14 |

| नं | नाम | रू | आ |
|---|---|---|---|

## न्याय ग्रन्थाः.

| नं | नाम | रू | आ |
|---|---|---|---|
| 32 | प्रामाण्यवादः | 3 | 4 |
| 33 | अवच्छेदकतानिरुक्ति | 0 | 14 |
| 34 | बाधगादाधरी | 0 | 15 |
| 35 | मूलगदाधरीये शब्द-खण्डः. | 1 | 4 |
| 36 | उपाधिवादः गदाधरस्य. | 2 | 0 |
| 37 | गादाधरी चतुर्दशलक्षणी. | 1 | 14 |
| 38 | गादाधरी पञ्चलक्षणी | 0 | 8 |
| 39 | सिद्धान्तलक्षणम् | 1 | 4 |
| 40 | पक्षता-गादाधरी | 1 | 8 |
| 41 | व्युत्पत्तिवादः | 2 | 8 |
| 42 | సవ్యభిచారసామాన్య నిరుక్తిః | 1 | 0 |
| 43 | सामान्यनिरुक्तिः | 0 | 12 |
| 44 | पदवाक्यरत्नाकरः | 2 | 8 |
| 45 | సాధారణాసాధారణ ఉపసంహారవిరోధగ్రన్థః | 1 | 0 |
| 46 | तत्वचिन्तामणौ अवयवग्रन्थः. | 1 | 0 |
| 47 | सत्प्रतिपक्षग्रन्थः | 0 | 14 |
| 48 | शतकोटिः | 0 | 6 |
| 49 | शतकोटिखण्डनम् श्रीकृष्णताताचार्य वि. | 0 | 6 |
| 50 | शतकोटिखण्डनम् श्रीमदनन्ताचार्यवर्यकृतम्. | 0 | 12 |
| 51 | शतकोटिमण्डनम् विजयराघवाचार्य विरचितम् | 1 | 0 |

## पाञ्चरात्र ग्रन्थाः.

| नं | नाम | रू | आ. |
|---|---|---|---|
| 52 | सात्वतसंहिता | 2 | 8 |
| 53 | ईश्वरसंहिता | 7 | 8 |
| 54 | पारमेश्वरसंहिता सव्याख्या. | 10 | 0 |

## सम्प्रदाय ग्रन्थाः.

| नं | नाम | रू | आ. |
|---|---|---|---|
| 55 | तत्वत्रयम् | 0 | 4 |
| 56 | मुमुक्षुप्पाडिरहस्यम् | 0 | 4 |
| 57 | श्रीवचनभूषणम् | 0 | 8 |
| 58 | श्रीवादिभीकरवैभवम् (सचित्रम्.) | 0 | 6 |
| 59 | श्रीवादिभीकरवैभवम् (चित्ररहितम्) | 0 | 4 |
| 60 | आचार्य चर्यामृतम् | 0 | 8 |
| 61 | ఆజ్ఞావైభవమ్ | 0 | 2 |
| 62 | அருளிசசெயலரஹஸ யம | 0 | 4 |
| 63 | ముక్తభోగావళీ | 0 | 2 |
| 64 | సచ్చరిత్రపరిత్రాణమ్ | 0 | 12 |
| 65 | பரஹமவிதயா | 1 | 8 |
| 66 | விஸிஷடாதவைத ஸித தாநத ஸாரம | 0 | 2 |
| 67 | ததவமஸி | அசசில | |
| 68 | ஏகமேவாதவிதீயம பரஹம | ,, | |

| नं | नाम | रू | आ. |
|---|---|---|---|
| 69 | வேதம | 2 | 0 |
| 70 | மோக்ஷம | 0 | 2 |

## आख्यायिकाः.

| नं | नाम | रू | आ. |
|---|---|---|---|
| 71 | संसारचक्रम् भा 1 | 1 | 0 |
| 72 | संसारचक्रम् भा 2 | 0 | 12 |
| 73 | युगलांगुलीयम् | 0 | 6 |
| 74 | श्रीबदरिकाश्रमयात्रा वृत्तान्तः- | 3 | 0 |

## पुराण ग्रन्थाः.

| नं | नाम | रू | आ. |
|---|---|---|---|
| 75 | काञ्चीमाहात्म्यम् | 1 | 12 |
| 76 | కాఞ్చీమాహాత్మ్యమ్ | 1 | 2 |
| 77 | మల్లాపురమాహాత్మ్యం యన్త్రస్థం | | |
| 78 | महाभारते शान्तिपर्व (यन्त्रस्थम्). | | |
| 79 | हरिवंशे शेषधर्मः (यन्त्रस्थः) | | |

## दिव्यप्रबन्ध व्याख्यान ग्रन्थाः.

| नं | नाम | रू | आ. |
|---|---|---|---|
| 80 | முதலாயிரம வியாககியானம 1வது பாகம பெரியாழவார திருமொழி வியாககியானம | 5 | 0 |
| 81 | ஷை 2 பாகம பெருமாள திருமொழி திருசசநத விருததம திருமாலை, திருபபளளியெழுசசி, அமலனாதிபிரான, கணணிநுணசிறுததாமபு இவைகளின வியாககியானம் | 5 | 0 (அசசில) |
| 82 | ஷை 3வது பா இதில திருபபாவை நாசசியாா திருமொழி, இவறறின வியாகயானங்கள இருககினறன | 5 | 0 |

## कोश ग्रन्थाः.

| नं | नाम | रू | आ. |
|---|---|---|---|
| 83 | लिङ्गनिर्णयभूषणम् | 0 | 2 |

## इतर ग्रन्थाः.

| नं | नाम | रू | आ. |
|---|---|---|---|
| 84 | वाल्मीकिभावदीपः | 1 | 0 |
| 85 | विष्णुसहस्रनामस्तोत्रम्. | 0 | 2 |
| 86 | लक्ष्मीसहस्रनामस्तोत्रम्. | 0 | 2 |
| 87 | सुभाषितकौस्तुभः | 0 | 4 |
| 88 | सप्तभङ्गीतरङ्गिणी (जैनग्रन्थ ). | 0 | 10 |
| 89 | सर्वदर्शनशिरोमणिः | 0 | 3 |
| 90 | भस्मधारणविचार | 0 | 2 |
| 91 | परतत्वनिर्णयः | 0 | 2 |
| 92 | पाञ्चोकालयाराधनविधिः. | 0 | 4 |
| 93 | Journal of P B Mutt | Free | |
| 94 | History of P B. Mutt | Free | |
| 95 | यतिवन्दनसमर्थनम् | 0 | 4 |
| 96 | दुर्वादविधूननम् | 0 | 8 |
| 97 | ఏకాదశీశ్రాద్ధనిర్ణయః | 0 | 12 |
| 98 | एकादशीश्राद्धमीमांसा | 0 | 4 |
| 99 | बडवानलः | 0 | 3 |

| न | नाम | रू | आ |
|---|---|---|---|
| 100 | अन्तर्व्यामित्वाहिर्व्याप्ति विचारः. | 0 | 2 |
| 101 | ऐकशास्त्र्यमीमांसा | 0 | 7 |
| 102 | [illegible] | 0 | 2 |
| 103 | सुदर्शनमीमांसा | 0 | 10 |
| 104 | क्रियाकैरवचन्द्रिका | 2 | 8 |
| 105 | श्रीवैष्णवमतदूषणोद्धारः | 1 | 0 |
| 106 | [illegible] | 2 | 0 |
| 107 | भोजनकुतूहलम् (यन्त्रस्थं) | | |
| 108 | श्रीभाष्यविमर्शनपरीक्षा. | 0 | 6 |

## हिन्दी भाषा की पुस्तकें.

| न | नाम | रू | आ |
|---|---|---|---|
| 109 | यतिराजवैभव | 0 | 6 |
| 110 | उपनयनगायत्रीमीमांसापरीक्षा. | 0 | 6 |
| 111 | चक्रधारणप्रमाणसंग्रह. | 0 | 4 |
| 112 | श्रीरामानुजसम्प्रदाय की प्राचीनता. | 0 | 1 |
| 113 | विशिष्टाद्वैतसिद्धान्तसारसंग्रहः. | 0 | 1 |
| 114 | चक्रधारण क्यों करना चाहिये. | 0 | 1 |
| 115 | सन्ध्यावन्दनाविधि | 0 | 2 |
| 116 | व्रतोत्सवनिर्णय | 0 | 2 |
| 117 | तत्वोद्बोधन | 4 | 0 |
| 118 | मिथ्याआक्षेपोंका निरास. | 0 | 2 |
| 119 | तिरुप्पल्लाण्डु | 0 | 4 |
| 120 | ऊर्ध्वपुण्ड्रधारणविधि | 0 | 1 |
| 121 | श्रीपराशरविशिष्टपरमधर्मशा[illegible] | 0 | 12 |
| 122 | वेदान्तरहस्[illegible] | 0 | 4 |
| 123 | श्रीशाण्डिल्य[illegible]पृपरमधर्मशा[illegible] | 0 | 12 |
| 124 | तप्तमुद्राधारण प[illegible] निर्णयसिन्धुकार-कारकाफैसला. | | |
| 125 | दिव्यदेशविवेचन | 0 | 1 |
| 126 | द्वन्द्वयुद्धसमीक्षा | 0 | 12 |
| 127 | वैदिकसर्वस्वकाविशेषाङ्क | 1 | 8 |
| 128 | अद्वैतविवेचन | 1 | 4 |
| 129 | सत्यार्थप्रकाश और श्रीवैष्णवसम्प्रदाय. | 0 | 6 |
| 130 | श्रीभगवदाराधनविधिः. | 0 | 2 |
| 131 | तुलसीमाहात्म्यदीपिका | 0 | 4 |
| 152 | पुरुषसूक्त (सटीक) | | |
| 133 | श्रीसूक्त ” | | |
| 134 | ईशावास्योपनिषत् (सटीक). | | |

प्राप्तिस्थानम्—

श्रीसुदर्शनमुद्रायन्त्रालय,
CONJEEVARAM,
(*Madras.*)

॥ श्रीः ॥

## श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना


| सख्या | विषय –प्रबन्धार | पुटसख्या |
|---|---|---|
| १. | कुट्टाकारशिरोमणिः (अनुवृत्तः) महालक्ष्मी-मुक्तावल्याख्यया नवटीकया सवलितः— महाविद्वांसः करूरु शेषाचार्याः | ६६ |
| २. | शास्त्रतत्त्वम्— पण्डितरत्नं महामहोपाध्यायाः लक्ष्मीपुरं श्रीनिवासाचार्याः | ८५ |
| ३ | कुवलयानन्दपाठसंशोधनम्— महाविद्वांसः क गोपालकृष्णशास्त्रिणः | १०० |
| ४ | श्रीमन्महाराज वैजननमहोत्सवश्लोकाः— विद्यार्थी नारायणः | ११० |
| ५ | ग्रन्थविमर्शः— | १११ |
| ६. | महापाठशाला वृत्तान्तः— महापाठशालाध्यक्षः | ११२ |

## स म्पा द की य स मि तिः

---

१ श्रीमन्तः वि सुब्रह्मण्यार्याः, बि ए,
विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२ श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर शामशास्त्रिणः बि ए, पिएच् डि, एं आर् ए.एस्, विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

३ श्रीमन्तः प्रोफेसर् डि श्रीनिवासाचार्याः, एं ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः ब्र श्री काशी शेषवेंकटाचलशास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र. श्री लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायाः

६ महामहोपाध्यायाः विद्यानिधयः धर्माधिकारिणः ब्र. श्री. विरूपाक्षशास्त्रिणः, महापाठशालायामद्वैतवेदान्तप्रधानोपाध्यायाः

७. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशालासाहित्यप्रधानोपाध्यायाः

८. महाविद्वांसः करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

९. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए महापाठशालाध्यक्षाः (सम्पादकाश्च)

# विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानी विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिक्रमितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्ध "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्' इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्धृदयं समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तु जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले)
२. विद्यार्थिनां पुनः एकरूप्यकम् प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः, एम्.ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

## मञ्जु-भाषिणी ।

---

इयमेकैव जगति संस्कृतभाषामयी साप्ताहिकी वृत्तान्तपत्रिका । संस्कृत-भाषा–ग्रन्थ प्रकाशकाना अनुत्तम विज्ञापनसाधनम् । **सर्वदेशेषु प्रचलति ॥**

**भारत ब्रह्मदेश लङ्का वासिभिर्देय वार्षिकं मूल्यम्—३-०-०**

**अन्यदेशीयैर्देयम्मूल्यं** ६ पिलिंग्स ॥

**मेनेजर—मञ्जुभाषिणी**

CONJEEVERAM, (Madras)

॥ श्री ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रयं प्रकटीक्रियमाणा.

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः "

(ईशोपनिषत्)

सम्पुटम् ७] एप्रिल् १९३१ [सञ्चिका २

योऽनन्तोऽनन्तशक्तिः सृजति जगदिदं पालयत्यन्तरात्मा
संविश्यान्ते निपीय स्वकमहिमगतः सत्यचिन्मूर्तिरास्ते ॥
योऽनुग्रः सज्जनानां परमहिततम पापिनामुग्रमूर्तिः
सोऽस्माकं वाञ्छितानि प्रदिशतु भगवानात्मदः श्रीनृसिंहः ॥

यन्मूलप्रवहत्पवित्रपयसः संसेवनादेव मे
रागद्वेषमदाभिधा ग्रहगणा नेशु स्म सन्तापिनः ।
यत्संसारपरिश्रमापहदयासंशीतलामोदभा-
ग्वन्दे तत्पुरुषोत्तमाश्रमगुरोः पादारविन्दद्वयम् ॥

(नित्यानन्दाश्रमस्य)

(अनुवृत्त)

अथ गताधिमासगतरविमासयोगो नवाद्रीषुरसेषु (५६५७९) सङ्ख्य.। अय गतचान्द्रमाससमूह । एष चतुर्युगभूमिसावनदिनैर्गुणित. सूर्याब्धिखाङ्काद्रिरविखाद्रिताराङ्काष्ट ८८२७७०१२७९०४१२ मङ्ख्यः। अस्मिन् चतुर्युगचान्द्रमासैर्विभक्ते लब्ध रुद्राष्टाभ्राद्यष्टि (१६७०८११) सङ्ख्यम्। अत्र शेषोऽष्टितानवेदाग्निद्व्यद्रि (७२३४-९१६) सङ्ख्य'। अत्र शेषोऽस्तीति लब्ध रूपयुक्त सूर्याष्टखाद्यष्टि (१६७०८१२) सङ्ख्यम्। एतद्गताना दर्शान्तावधिकाना चान्द्राणां मासाना त्रैराशिकसिद्ध भूसावनदिनवृन्द भवति। अथाऽर्यया क्षयदिनशेषावलम्बनेन काश्चित्प्रश्नान् स्फुटयति ॥

अवमाग्रादिष्टदिन

विनेष्टदिवसैर्ग्रहांस्तदग्राणि।

अधिमासानपि यातान्

यो वक्ति स एव दैवज्ञ ॥ ९

अत्र चत्वारः प्रश्नाः। ऐष्ववमाग्रादिष्टदिन यो वक्ति स एव दैवज्ञ इति प्रथमः। अत्रेष्टदिनामितिजात्येकवचनम्। अवमदिनशेषादानीतैरिष्टदिवसैर्ग्रहास्तच्छेषा गताधिकमासाश्च विज्ञेयाः। अतोऽवमाग्रज्ज्ञातैरिष्टदिवसैर्विनाऽवमाग्रादेव ग्रहान् यो वदति स एव दैवज्ञ इति द्वितीयः। अत्र ग्रहशब्देन भगणाद्या वाञ्छिता. सचन्द्रोच्चपाता बुधशुक्रशीघ्रोच्चसहिता मध्यग्रहा उच्यन्ते। अथाऽवमाग्रादागतैर्विनाऽवमाग्रादेव ग्रहशेषान्यो वक्ति स एव दैवज्ञ इति तृतीय'। अथाऽवमाग्रादागतैरिष्टदिवसैर्विनाऽग्रादेव यातानधिमासान्यो वक्ति स एव दैवज्ञ इति चतुर्थ.। अत्र प्रश्नचतुष्टयेऽपि दैवज्ञशब्देन कुट्टाकारज्ञ उच्यते। एवमुत्तरत्रापि द्रष्टव्यम् अथैषां प्रश्नानां भङ्गार्थमार्यापञ्चकमाह॥

अवमाग्र वेदहृत
 चन्द्राग्निगुणेषुनन्दनागघ्नम् ।
रामरसेषुखपर्वत
 नेत्राङ्गहृत गतावमं शेषम् ॥ १०
वेदहृत क्षयशेप
 मुनिषड्गुणकृतिविलोचनाद्रिशरै ।
निहत नखाग्रखेषु
 स्वराम्बराकाशवेदसम्भक्तम् ॥ ११
शेष गतावमोन
 तद्विद्यादिष्टदिवससंघातम् ।
गतमवम कुदिनहत
 क्षयाग्रयुक्त भचक्रसंगुणितम् ॥ १२
कुदिनहतावमभक्त
 फल भचक्रादिको भवति खेटः ।
शेष युगावमहृतं
 तच्छेष सभवेत् फल लब्धम् ॥ १३
वर्णसुरेभाङ्कगुणैर्याता
 न्यवमानि ताडयित्वाऽथ ।
गुणषट्पञ्चखशैल
 द्विरसैर्लब्धा गताधिमासा. स्यु. ॥ १४

उद्दिष्टमवमशेष वेदहृत ततश्चन्द्राग्निगुणेषुनन्दनागैः ८९५३३१ हतं, रामरसेषुखपर्वतनेत्राङ्गै (६२७०८६३) हृत कार्यम्। अत्र शेष गतावमादिन भवति एतत्फल भवति। अथोद्दिष्टमवमाग्र वेदहृत, ततो मुनिषड्गुणकृतिविलोचनाद्रिशरै (५७२२०३६७) निहत,

नखाभ्रखेषुस्वराम्बराकाशवेदैः (४००७५००२०) सभक्तं कार्यम् । अत्र शेषं गतचान्द्रदिनं भवति । कुट्टाकाराख्यो गुणोऽप्येतदेव । एतद्गतावमदिनोनं कार्यम् । अत्र यच्छेषं तदिष्टदिवससञ्चयं जानीयात् । अथाऽतीतमवमदिनं युगभूमिसावनैर्गुणितं ततः उद्दिष्टोनावमदिनशेषेण युक्तं जिज्ञासितस्य ग्रहस्य युगभगणैः सङ्गुणितं, युगसावनगुणितैर्युगावमदिनैर्भक्तं कार्यम् । अत्र लब्धं फलं भगणादिर्जिज्ञासितो मध्यग्रहो भवति अत्र यच्छेषं तद्युगावमदिनहृतं कार्यम् । अत्र लब्धं तच्छेषं भवति । एतदुक्तं भवति । मध्यग्रहो भगणरूपश्चेत्तदा लब्धं भगणशेषं भवति । सराश्यन्तश्चेत्तद्राशिशेषं । सभागान्तश्चेत्तद्भागशेषं । सलिप्तान्तश्चेत्कलाशेषं सविकलान्तश्चेत्तद्विकलाशेषं भवतीति । अथ गतावमदिनानि वर्णसुरेभाङ्कगुणैः (३९८३३४) हत्वा गुणषट्पञ्चखशैलाद्रिरसैः (६२७०५६३) हरेत् । अत्र लब्धा गताधिमासा भवन्ति । अत्र शेषे भागहारार्धाधिकेऽप्यर्थोत्तरत्वेन रूपक्षेपो न कार्यः । नन्वत्राऽवमाग्रेणैव गताधिमासानयने कर्तव्ये गतावमदिनैस्तदानयनं प्रदर्शितं । कथमेतदत्रोऽच्यते । अवमाग्रादेवाऽनीतैर्गतैरवमैर्गताधिमासेष्वानीतेष्वपि पारम्पर्येणावमाग्रादेव गताधिमासानयनमित्यदोषः । उद्देशकः ॥

पूर्णाभ्रतर्कनयनेषुनवार्थनाग
रामेन्दुसङ्ख्यमवमाग्रमतो दिनानि ।
एतैर्विनाऽम्बरचरान् भगणादिशेषान्
याताधिमासनिवहं तु वदाशु विद्वन् ॥ २८ ॥

अत्रायमवमदिनशेषः (१३८५९५२६००) अस्मादुक्तवदानीतान्यभीष्टदिनानि सूर्याष्टखाद्यष्टि (१६७०८१२) सङ्ख्यानि । एभिरिष्टदिनैर्विनोद्दिष्टैनैवक्षयाग्रेणोक्तवदानीतो भगणात्मको रविमध्यो वर्णाद्रीषुकृत (४५७४) सङ्ख्यः । भगणशेषो वसुव्यङ्गाब्ध्यङ्कषडीशार्थ

(५११६९४६२८) सङ्ख्य. । एव राश्यन्तादयो रविमध्यात्तत्तच्छेषाश्चन्द्रादयस्तत्तच्छेषा अप्यानेया । अथाऽत्रोक्तवदानीता गताधिमासा. सप्ताष्टाष्टि (१६८७) सङ्ख्या ॥

अत्रोदितो गणनकर्मलघुत्वहेतो-
भूवासराहतयुगक्षयवासरौघ' ।
षट्पञ्चतर्कवसुनागकुशैलनन्द
तत्वाग्नयगाद्रिगिरिबाणनवाग्नि (३९५७७७३२५९७१८-८६५६) सङ्ख्य ॥२२॥

अथाऽर्यया कौचित् प्रश्नौ दर्शयति ।

ग्रहमध्यैक्याद्भादे-
र्वितत्परान्तादिनानि यो वदति ।
तन्मध्यानि च तस्मात्
पृथक्पृथग्दिनचय विना स सुधी ॥ १५

भादे राश्यादेर्वितत्परान्तात् तत्पराणां षष्ट्यशो वितत्परा । तदन्ताद्ग्रहमध्यैक्यात् उद्दिष्टग्रहमध्यमसयोगात् । इष्टभूवासराणि यो वदति स सुधीरित्येक. प्रश्न । दिनचय विना ग्रहमध्यैक्यात् आनीतमिष्टदिनसमूहं विना । तस्माद्ग्रहमध्यैक्यादेव । तन्मध्यानिच । अत्र द्वित्वमविवक्षित तेन सयुक्तयोर्ग्रहयोर्मध्यमौ संयुक्ताना ग्रहाणा मध्यमानपि पृथक्पृथग्यो वदति स सुधीरित्यपर. प्रश्न । अत्र ग्रहमध्यैक्यानयन प्रदर्श्यते । इष्टग्रहयोरिष्टग्रहाणा वा युगभगणान्योजयित्वा तैरिष्टदिनानि हत्वा युगभूदिनैरेव विभजेत् । अत्र लब्धा भगणा । तानपास्य शेषं द्वादशादिभिर्हत्वा युगभूदिनैरेव विभजेत् । अत्र लब्धा राश्यादयो भवन्ति एव वित्परान्त कुर्यात् । अत्र वितत्पराशेषे युगभूदिनार्धादधिके सत्यर्धोत्तरत्वेन वितत्परास्वेकां वितत्परां क्षिपेत् ।

एव कृते ग्रहमध्यैक्य भवति । एवमागतग्रहमध्यैक्यावलम्बनेनैवाऽत्र प्रश्नद्वयमिति मन्तव्यम् । अथैतत्प्रश्नद्वयभङ्गार्थमार्यात्रयमाह ॥

ग्रहमध्यमसयोग
वितत्परीकृत्य दृढदिनैर्हत्वा ।
नियुतहतषडिषु-
रसरसवेदैर्विभजेत्फल क्षयक्षेप· ॥ १६

तद्दृढभगणैक्यदिनै-
र्निरग्रमार्गेण गुणफले कुर्यात् ।
तत्त्रिगुणो दिननिकर
फल ग्रहाणां गतानि चक्राणि ॥ १७

मध्यैक्य चक्रयुत
तत्तद्भगणै· पृथक्पृथग्घत्वा ।
तद्भगणैक्येन भजेत्
तत्तन्मध्य फल सपर्यायम् ॥ १८

अत्रादौ दृढदिनदृढभगणैक्ययो स्वरूप च दर्शयति । उद्दिष्टग्रहयोरुद्दिष्टग्रहाणा वा युगभगणान्संयोज्य तेषां युगभूदिनानामप्यपवर्तकोऽस्ति चेत्तेन सयुक्तानुद्दिष्टग्रहभगणान् युगभूदिनानि चापवर्तयेत् । एवमपवर्तितानि युगदिनान्यत्र दृढदिनानि । एवमपवर्तितामिष्टग्रहयोरिष्टग्रहाणां वा युगभगणैक्यम् । अपवर्तको नास्ति चेद्युगदिनान्येव दृढदिनानि । उद्दिष्टग्रहयुगभगणयोग एव दृढभगणैक्यमिति । अथोद्दिष्टग्रहभगणैक्य वितत्परीकृत्य तान् दृढदिनैर्हत्वा चक्रवितत्परामिः (४६६५६०००:०) विभजेत् । अत्र शेषे चक्रवितत्परार्धादधिके सत्यर्धोत्तरत्वेन रूप फले क्षिपेत् । एवमानीत

फलमत्र ऋणक्षेप· दृढभगणयोगो भाज्यराशि· । दृढदिनचयो भाजक । एभिरुक्तवद्गुणफले आनयेत् । अत्र गुण इष्टदिनसमूहः । फल तु सयुक्तग्रहगतभगणा अथ गतभगणयुक्त ग्रहमध्यैक्य संयुक्तेषु ग्रहेष्वेकस्य युगभगणै· पृथक् पृथक् गुणयित्वा सयुक्तग्रहयुगभगणैक्येन विभजेत् । लब्ध सपर्याय तन्मध्य भवति । सयुक्तग्रहेषु यस्य यस्य युगभगणैर्गुणित, तस्य तस्य भगणादिमध्य भवतीत्यर्थ । अत्र प्रक्रिया सम्यक्प्रदर्शितेति नोद्दिश्यते एवमुत्तरत्रापि यत्र यत्र प्रक्रियया सम्यक्प्रदर्शयिष्यते तत्र तत्र नोद्दिश्यत इति मन्तव्यम् । अथार्यया ग्रहविकलाशेषावलम्बनेन काश्चनानुयोगानाह ॥

विकलाशेषाद्दिवसान्
मध्य दिवसैर्विनाऽन्यतच्छेषान् ॥
अवमदिनैस्तच्छेषावधि-
मासाश्च ब्रवीति य सकृती ॥ १९

अत्र सप्त प्रश्ना । एषु विकलाशेषाद्दिवसान्यो ब्रवीति स कृतीति प्रथम । विकलाशेषादेव विकलाशेषवन्मध्य यो वक्तीति द्वितीय· । विकलाग्रादानीतैरिष्टदिवसैर्विना विकलाग्रादेवान्यग्रहमध्यान्यो वदतीति तृतीयः । विकलाग्रेणानीतैरिष्टदिनैर्विना विकलाग्रेणैवान्यग्रहविकलाशेषान्यो वदतीति चतुर्थ· । विकलाग्रादागतैरिष्टदिनैर्विना विकलाग्रादेव गतावमदिनानि य· कथयतीति पञ्चमः । विलिप्ताशेषावगतानि दिनानि विना विलिप्ताशेषादेवावमदिनशेष यो वदतीति षष्ठः । विलिप्ताग्राज्ज्ञातेभ्योऽभीष्टदिनेभ्यो विलिप्तिकाग्रादेव गताधिमासान् यो ब्रूते स कृतीति सप्तम । अथैतेष्वाद्ययो प्रश्नयोर्भङ्गार्थं गुणफले प्रदर्शयिष्यन्नादौ तदुक्तक्रममार्ययाह ॥

अथ गुणफले क्रमेण
प्रतिखेटमिहैकयाऽर्ययोच्येते ।
दिनकरकाव्यबुधाना
साधारणमेव ते निगद्येते ॥ २०

एतदुक्तं भवति । चन्द्राङ्गारकबुधबृहस्पतिशनैश्चराणां बुधकाव्यशीघ्रोच्चयोश्चन्द्रोच्चपातयोश्च प्रत्येकमेकार्यया गुणफले क्रमेणोच्येते ॥

रविबुधभार्गवाणां तु साधारणमेवैकयार्यया
गुणफले क्रमेणोऽच्येत इति ।

रविभृगुविदां नवाम्बरशैलाक्ष्यत्यष्टिनयनशरचन्द्राः
गिरिपूर्णवेदवह्न्यगशरकृतरामाङ्कनन्दरामशरा ॥ २१

सूर्यकाव्यबुधानां गुणः (१५२१७२७०९) एषां फलं (५३९९३४५७३४०७) ।

चन्द्रस्य दन्तिसिन्धुर
नन्दाकाशाङ्गवह्निभूमिरसा ।
भूयुगनवककृतानल
खशरर्तुवियच्छशाङ्कनन्दकरा ॥ २२

चन्द्रस्य गुणः (६१३६०९८८) अस्य फलं (२९१०६५०३४९.४१).

धरणीसुरस्य नखधृति
चन्द्रार्थशरद्वयक्षपानाथाः ।
स्वरावियदुदधिगुणार्थ
द्विकृताद्रिक्ष्माधराङ्कवाह्नियमाः ॥ २३

भौमस्य गुणः (१२५५११८२०) फलं (२३६७७४२५३४०७.)

विच्छीघ्रस्य वियद्रस
गुणनन्दकृताभ्रचन्द्रशरपक्षाः ।
ऋषिखाब्धिगुणहयाचल
भूताब्ध्यर्थाष्टरन्ध्रतर्कगुणाः ॥ २४

बुधशीघ्रोच्चस्यगुण (२५१०४९३६०) अस्य फल (३६९८५४५७-७३४०७)

सुरपूजितस्य गुणरस
बाणाक्षिनवाग्निबाहुरजनीशाः ।
तुरगवियदब्धिपुष्कर
रन्ध्राकाशाष्टगगनमुनिरामाः ॥ २५

गुरोर्गुण (१२३९२५६३) फल (३७०८०९३४०७) ॥

सितशीघ्रस्य युगाष्टक मुनिवसुरसनयनकुञ्जरेशाना ।
हयशून्यमनुशराभ्रद्वयसिन्धुमृगाङ्कदस्रगजतर्काः ॥ २६ ॥

शुक्रशीघ्रोच्चस्य गुण । (११८२६८७८४) अस्य फल (६८२१-४२०५१४०७)

सौरस्य रन्ध्रसप्तक-
वर्णाष्टकवह्निखाभ्रवायुसखा ॥
शैलाभ्रसिन्धुभूधर
मुनिखरसेन्दुरसकृष्णवर्त्मानः ॥ २६

शनैश्चरस्य गुण (३००३८४७९) फलं (३६१६०७७४०७)

चन्द्रोच्चस्य रसग्रह
रसवसुशरशिखिमहीधराङ्कभुवः ।
गिरिगगनसागरग्रह
गजमार्गणतर्कलोकरन्ध्रनगाः ॥ २७

"चन्द्रोच्चस्याग्निशून्याश्वी"ति (सू, सि, १ अ, ३३ श्लो) पाठानुसारेण गुणः। (१९७३५८६९६) अस्य फल (७९१४६५-८९४०७)

राहोर्नवतिथिभूभृद्बा-
णाकाशाद्रिविष्णुपदरामा. ।
अचलाम्बरार्णवस्वर
रूपाद्रिनवतुभूतसपार्था ॥ २८

"वाम पातस्य वस्वग्नी"ति (सू, सि, १ अ, ३३ श्लो) पाठानुरोधेन राहो गुण· (३०७०५७१५९) अस्य पलम् (५८५६-९७१७४०७)। अथैवं दर्शितैर्गुणफलैरिष्टदिनविकलाग्रहानयनमार्याभ्याह ॥

गुणनिहत विकलाग्र
कुदिनैर्विभजेद्यदत्र पारिशिष्टम् ।
पारावारैर्विभजेत्
तत्पलमिष्ट भवेद्दिवसबृन्दम् ॥ २९

विकलाशेष स्वफलैर्हत्वा
विकलीकृतैर्हरैश्चक्रैः ।
अवशेषमपि समुद्रै-
र्विभजेल्लब्ध विलिप्तिकाखेटः ॥ ३०

गुणनिहत विकलाशेष भूदिनैर्विभजेत् । अत्र लब्धेन नास्ति प्रयोजनम् । अत्र पारिशिष्ट यत् तत् पारावारैर्विभजेत् । अथ विकलाशेषमेव स्वफलैर्हत्वा विकलीकृतैर्विकलाग्रवद्ग्रहभगणैर्विभजेत् । अत्राव-शेषमपि समुद्रैर्विभजेत् । अत्र लब्ध विलिप्तारूपो मध्यग्रहो भवेत् ।

अथैवमागताभिर्ग्रहविकलाभिस्ताद्विकलाशेषेण चान्यग्रहमध्यतच्छेषक्षयदि-
नतच्छेषाधिमासानामानयनप्रकारमार्याचतुष्टयेनाह ॥

ग्रहविकला दिनविहता
विकलाग्रयुता ध्रुव भवेत्तत्तु ।
जिज्ञासितस्य भगणै
संताड्य ज्ञातमण्डलैर्हत्वा ॥ ३१

लब्ध कुदिनैर्विभजेत्
फलमिह जिज्ञासितो ग्रहो भवति ।
शेष तद्विकलाग्र
भवत्यथ प्राक्प्रदर्शितध्रुवकम् ॥ ३२

हत्वा युगावमदिनैर्विभजे
द्विकलीकृतैः खचरचक्रै. ।
लब्धे भूदिवसाप्ते
फलशेषौ स्त क्षयाहतच्छेषौ ॥ ३३

ध्रुवमधिमासैर्हत्वा
विभजेत्खचरस्य भगणविकलाभिः ।
लब्ध फल कुदिवसै-
र्विभजेल्लब्ध भवेयुरधिमासा ॥ ३४

ग्रहविकला युगदिनाहता उद्दिष्टविकलाशेषयुक्ताश्च कार्याः । एव कृते तद्ध्रुवं भवति । तत्तु ज्ञातमिष्टस्य ग्रहस्य युगभगणैः सगुण्यो-द्दिष्टविकलाग्रवद्ग्रहयुगभगणैर्हत्वा तत्र लब्ध च भूदिनैर्विभजेत् । अत्रागत फल जिज्ञासितो मध्यग्रहो भवति । शेष तद्विकलाशेष भवति। अथ पूर्वोक्तध्रुव युगावमदिनैर्हत्वा विलिप्तीकृतैरुद्दिष्टशेषवद्ग्रहयुगभगणै-र्विभजेत् । अत्र लब्धे भूदिवसाप्ते सति फलशेषौ क्रमाद्गतावमदिनत-

च्छेषौ भवत । अथ ध्रुव युगाधिमासैर्हत्वोद्दिष्टविकलाग्रतो ग्रहस्य युगभगणविकलाभिर्हरेत् । अत्र लब्ध फल च युगभूदिनैर्हरेत् । अत्रागत फल गताधिमासा स्यु । उद्देशक ॥

विलिप्ताग्रात्पूर्णाष्षडिषुनवखाष्टीभगगन
क्षमासङ्ख्यादस्मात्त्वरितमभिधत्स्वेष्टदिवसान् ।
विनैभिर्भास्वन्त विधुमपि तदग्र क्षयदिन
ततश्चैतच्छेष वद तदधिमासानपि गतान् ॥ २९ ॥

रवेर्विकलाशेषमिदं (१०८१६०९५६) अस्मादुक्तवदानीता दिवसा सूर्याष्टखाद्यष्टि (१६७०८१२) सङ्ख्या । एभिर्विना रविविकलाग्रादेवोक्तप्रकारेणानीतो विकलारविः त्रिभाब्धिद्विन्यष्टद्यङ्केषु (५९२८३२४२७३) सङ्ख्य । विकलाचन्द्र सप्तेन्दुद्विरसाब्ध्यगाब्धितत्वाङ्कादि (७९२५४७४६२१७) सङ्ख्यः । चन्द्रविकलाशेष सङ्कृत्यग्नितिथिकृतषड्वेदाद्रि (७४६४१५३२४) सङ्ख्य । क्षयदिवसा गजार्थेषुषडक्षि (२६५५८) सङ्ख्या अवमाग्र खाभ्राङ्काब्धीषुनन्दार्थाष्टलोक (१४८५९५४६००) सङ्ख्यम् । अधिमासा. सप्ताष्टाष्टि (१६८७) सङ्ख्या । एतत्सर्वं रविविकलाग्रादेवोक्तवदानीतम् । अथ भगणादिशेषैरिष्टदिनग्रहोपायमार्ययाऽऽह ॥

भगणग्रहभागकला
शेष भगणाग्रमेव रचयित्वा ।
तेन दिनग्रहविकला
कुर्याद्भगणादिखेचराश्चाभि ॥ ३५

उद्दिष्टभगणादिशेष विकलाशेषं कृत्वा तेनोक्तमार्गेणेष्टदिनानि ग्रहविकलाश्चानयेत् । अथाभिर्ग्रहविकलाभिर्युक्त्या भगणग्रहादींश्च कुर्यात् । अथ स्वस्वविकलाग्राद्ग्रहाणा साधारण विकलामध्यानयन सार्धयाऽऽर्ययाह ।

सिन्धुहृते विकलाग्रे
खत्रयरसरन्ध्रभास्करैर्भक्ते ।
यच्छेष तद्धत्वा शैला-
काशाम्बुधिम्वराग्निकरै ॥ ३६
खखखर्तुनन्दसूर्यै-
र्विभजेच्छेष ग्रहो विलिप्तात्मा ।

सिन्धु (४) हृते विकलाग्रे खत्रयरसरन्ध्रभास्करै (१२९६०००) भक्ते सति तच्छेष शैलाकाशाम्बुधिम्वराग्निकरै (२३७४०७) हत्वा खखखर्तुनन्दसूर्यै (१२९६०००) विभजेत् । लब्धेन प्रयोजन नास्ति । शेष विकलात्मको मध्यग्रहो भवति । अत्रेदमनुसन्धेयम् । यस्य विकलाग्राद्यदेवमानीत मध्य तत्तस्यैवेति । अथाऽऽर्ययाधनक्षेप-विषयप्रश्नमाह ॥

योे वेद दिवसखेटौ विकलाशेषोनयुगादिनौ घेन ॥ ३७
भारतवर्षे सोऽस्मिन् भजति घनक्षेपमार्गवेदित्वम् ।

विकलाशेषोनयुगादिनौघेन दिवसखेटौ यो वेद सोऽस्मिन्भारत-वर्षे घनक्षेपमार्गवेदित्व भजति ।

अथैतत्प्रश्नभङ्गार्थमार्याद्वय सार्धमाह ।

निजनिजगुणफलराशी निजनिजदृढदिवसभाज्यराशिभ्याम् ॥३८
जह्यादिहावशेषौ खचराणा गुणफले क्रमाद्भवत ।
ताभ्या जलनिधिभक्तौ विमौविकाग्रोनयुगदिनस्तोमौ ॥ ३९
हत्वा विभजेद्दृढदिनभाज्याभ्यामत्र ये च परिशिष्टे ।
तत्रादिम दिन स्यादपर खेटो विमौविकारूप' ॥ ४०

अत्र युगादिनचतुर्थांश सर्वेषा दृढदिवसः स्वस्वविकलीकृत-युगभगणचतुर्थांश स्वस्वभाज्यराशि । एवविधाभ्यां निजनिजदृढदिवस-

भाज्यराशिभ्या क्रमात् पूर्वोक्तौ निजनिजगुणफलराशी जह्यात् । इहाव-शेषौ क्रमात् खचराणा निजनिजगुणफले भवत । ताभ्या क्रमाज्जल-निधिभक्तौ द्रावुद्दिष्टौ विमौर्विकाग्रोनयुगदिनस्तोमौ हत्वा निजनिज-दृढभाज्याभ्या क्रमाद्विभजेत् । अत्र लब्धाभ्या प्रयोजनं नास्ति । अत्र ये च परिशिष्टे स्त तत्र दिन स्यात् । अपर विमौर्विकारूप खेट' स्यात् । विमौर्विकाविकला । अथ स्वस्वविकलाशेषोनयुगदिनै. सर्वेषा साधारण विकलाग्रहानयनप्रकार सार्धयार्ययाह ॥

अथवा वारिधिभक्तान् स्वस्वविलिप्ताग्रहोनयुगदिवसान् ।
रामाङ्कभूतवसुशारदिग्भि सन्ताब्यचक्रविकलाभि' ॥ ४१
विभेजत तत्र शेषा भवन्ति खचरा विलिप्तिकात्मानः ।

स्पष्टोऽर्थ । अत्रानन्तरोक्ते प्रकारद्वयेऽपि धनक्षेपत्वात् विक-लाग्रहएकाविकलाधिका भवेत् ॥

अथार्यया विकलाग्रहाश्रयणे दिनवि
कलाशेषविषयौ प्रश्नावाह ।
विकलाग्रहाद्दिनौघ विकलाशेष च
यो भणति शीघ्रम् ॥ ४२
चतुरुदधिमेखलायां चतुरमनीषो भवत्यसौ भूमौ ।

स्पष्टार्थेयमार्या

अथैतत् प्रश्नभङ्गार्थमध्यर्धामार्यामाह ।

ग्रहविकला' कुदिनहता' भगणविलिप्ताहृता दिन लब्धम् ॥४३
शेषेऽत्र सति तु लब्धं सैकं कार्यं ततो दिवसवृन्दम् ।
शेषोनभागहारे विकलाशेषो भवेद्ग्रहेप्यस्य ॥ ४४

भूदिनहता ग्रहविकला विकलीकृतग्रहयुगभगणहृता कार्या । अत्र शेषाभावे लब्धमवष्ट भवति शेषे सति तु लब्ध सैकं कार्यं ।

तत स्वेष्टदिवसवृन्द भवति । अत्र शेषाभावे विकलाशेषो नास्ति। शेषे सति तु शेषोन विकलीकृतग्रहयुगपर्यायवृन्द विकलाग्र भवेत्। अत्र शेषाभाव कादाचित्क । अथार्ययैकम्यैव ग्रहस्य एकदिनजातभगणराशिभागकलाविकलाशेषयोगादिष्टदिनानि यो वेत्ति स एव कुट्टाकार वेदेत्याह ॥

चक्रसदनाशलिप्ताविलिप्तिकाग्रैक्यतोऽभिमतदिवसान् ।
यो जानाति स भूम्या कुट्टाकार स एव जानीते ॥ ४५

अवनारिकयागतार्थेयम्
अथैतत्प्रश्नभङ्गायसार्धामार्यामाह ।
अत्राग्रैक्ये कुदिनैर्विहृते शेष भवेत् क्षयक्षेप
त्र्यग्न्यङ्काद्रिकुविश्वैर्गुणित ग्रहचक्रमस्य भाज्य स्यात् ॥ ४६
कुदिन छेदस्त्वेतैर्गुणक कुर्यादमावभीष्टदिनम् ।

अत्रोद्दिष्टे भागादिशेषयोगे सति सम्भवे क्षितिदिनैर्विभक्ते सति यच्छिष्यते तदत्र ऋणक्षेप स्यात्—त्र्यग्न्यङ्काद्रिकुविश्वै (१३१७९७३) गुणितानि ग्रहयुगचक्राण्यत्र भाज्यराशिर्भवेत्। क्षितिदिनानीह भाजक स्यात्। एतैस्तु पूर्वोक्तमार्गेण गुणमानयेत्। एवमागतोय गुणएवेष्टदिनानि स्यु । अत्र वारकुट्टाकारो द्विविधः। अत्रोद्दिष्टभगणादिशेषावलम्बनेनैकः । उद्दिष्टग्रहालम्बनेनापर एव वेलाकुट्टाकारोपिवेदितव्य । अत्र यावुद्दिष्टग्रहाश्रयणेन वारवेलाकुट्टाकौ तावुत्तरत्र प्रदर्शयिष्येते । अत्र तूद्दिष्टभागाद्यग्राश्रयेणानीयमानौ यौ वारवेलाकुट्टकौ तौ क्रमेण प्रदर्श्येते। वारकुट्टाकारगतभगणशेषावलम्बेनोद्देशकः। देवेन्द्रार्चितवारपूर्तिसमये राजीवबन्धोरभूच्चक्राग्र नियुताहृताष्टककरक्ष्माभृन्मही (१७२८००००) सम्मितम् ॥

भूयोप्येतदभूत् सितेन्दुकुजविद्वारावसाने सम ।
तत्कालान्वद वारकुट्टकविधौयद्यस्तिते सस्तव ॥ ३० ॥
अथैतदादि, प्रश्नभङ्गायार्या समकमाह ।
खचरणां युगभगणा भाज्यो राशिर्भवेत्तदानीं तु ॥ ४७
भगणाग्रे ह्युद्दिष्टे तद्भगणाग्र भवेद्दणक्षेप ।
भवनी भूताभगणा भाज्यो राशिर्भवेत्तदानीं तु ॥ ४८
भागाग्रे तूद्दिष्टे तद्भागाग्र भवेद्दणक्षेप. ।
भागीभूता भगणा भाज्यो राशिर्भवेत्तदानीं तु ॥ ४९
लिप्ताग्रे तूद्दिष्टे तल्लिप्ताग्र भवेद्दणक्षेप ।
लिप्तीभूता भगणा, भाज्यो राशिर्भवेत्तदानीं तु ॥ ५०
विकलाग्रे तूद्दिष्टे तद्विकलाग्रं भवेद्दणक्षेप ।
विकलीभूता भगणा भाज्यो राशिर्भवेत्तदानी तु ॥ ५१
युगभूसावनदिवसान्येव स्याद्भाजकोऽत्र सर्वत्र ।
एभिर्भाजकभाज्यक्षेपैर्यो भवति वर्धकस्सोत्र ॥ ५२
आदिमकालस्तस्मिन् दृढदिवसान्बुद्धिसगुणान्युक्त्वा ।
अभिहितवारान्तान्तान् कालानन्यांश्च साधयेत्प्राज्ञः ॥ ५३

भगणशेषउद्दिष्टे सति तदुद्दिष्ट भगणशेष क्षपक्षेप स्यात् । तदा पुनर्ग्रहाणां चतुर्युगभगणा भाज्यराशि· स्यात् । तत्र, हिशब्दो हेतौ यस्मादुद्दिष्टभगणशेषमृणक्षेपो भवति । तस्माद्ग्रहयुगभगणा भाज्यराशि. स्यादिति । राशिशेष उद्दिष्टे सति तदुद्दिष्ट राशिशेष-मृणक्षेप. स्यात् । तदानीं तु द्वादशगुणितयुगभगणा भाज्य. स्यात् । भागशेष उद्दिष्टे तु तदुद्दिष्टं भागशेषमृणक्षेप· स्यात् । तदानीं तु षष्ट्युत्तरशतत्रयहता युगभगणा भाज्यः स्यात् । कलाशेष उद्दिष्टे तु तदुद्दिष्ट कलाशेषमृणक्षेप· स्यात् । तदानीं खखषड्धन (२१६००)

निहता युगभगणा भाज्य. स्यात्। विकलाशेष उद्दिष्टे सति तदुद्दिष्ट विकलाशेषमृणक्षेप स्यात्। तदानी तु खत्रयर्त्वङ्कार्का(१२९६०००)भ्यस्ता ग्रहचतुर्युगभगणा भाज्यराशि स्यात्। अत्र सर्वत्र चतुर्युगभूदिनान्येव भागहारो भवेत् एव प्रदर्शितैरेतैर्भाज्यभाजकक्षेपै. पूर्वोक्तप्रकारेण यो गुणो भवति । स इहोद्देशकश्लोकप्रथमकथितवारान्तान्त प्रथमकालः स्यात्। अथ तस्मिन्नाद्यकाले मतिगुणितान् दृढदिवसान् निक्षिप्योद्देशकश्लोकान्तरोक्तवारान्तान्तानन्यान् कालानपि कुट्टकगणितज्ञ साधयेत्। एतदुक्त भवति। दृढदिनेषु सप्तहृतेषु यच्छिष्यते तदवलम्बनेन, दृढदिवसाना कियतीभिरावृत्तिभिरुद्दिष्टवारा. समायान्तीत्यालोच्य तावतीभिरावृत्तिभिर्गुणितान् दृढदिवसान् गुणयित्वोद्देशकश्लोकानन्तरोक्तवारावसानानन्यान्कालानपि साधयेत्। अत्र फल तदुद्दिष्टभगणादिशेषवशाद्यथाक्रम ग्रहभुक्तभगणादिभिर्भवति! न्यास. अत्रोद्देशकश्लोकस्थो रविभगणशेषोयम् (१७२८०००००) अयमत्र ऋणक्षेप रवियुगभगणा. खचतुष्करदार्णवा. (४३२००००) भाज्यराशि। युगभूदिवसा 'वसुद्व्यष्टाद्रिरूपाङ्कसप्ताद्रितिथय' (१५७७९१७८२८) (सूर्यसिद्धान्ते १ अध्याये श्लो. ३७) भाजकराशि। एभिर्भाज्यभाजकक्षेपै पूर्ववदानीतो गुण खाब्धि (४०) सङ्ख्य. अयमेवोद्देशकश्लोकप्रथमोक्तगुरुवारान्तः सृष्ट्यादिर्दिनगण। एषप्रथमकाल.। अस्मिन्नेकगुणे सप्तेष्वब्ध्यङ्काद्रिकृताब्ध्यङ्काग्नि. (३९४४७९,४५७) सख्ये दृढदिने दत्ते सप्ताङ्काब्ध्यङ्काद्रिवेदाब्धिग्रहाग्नि (३९४४७९४९,७) सख्य शुक्रवासरावसान सृष्ट्यादिर्दिनगण। एष द्वितीयकाल। अथ पूर्वमागते गुणे ४० चतुर्गुणदृढदिने क्षिप्ते वसुरसाष्टाद्रीन्द्वङ्काद्रिमुनितिथि (१५७७९१७८६८) सख्यश्चन्द्रवारान्तान्त सृष्ट्यादिर्दिनगण। अय तृतीयकाल। अथ गुणे (४०) पञ्चगुणदृढदिने

क्षिप्ते तत्वत्र्यग्न्यङ्काग्निद्व्यद्यतिधृति (१९७२३९७३२५) सङ्ख्य· कुज-वारान्तान्त सृष्ट्यादिर्दिनव्रज । एष चतुर्थकाल· । अथ गुणे षड्गुणदृढदिने क्षिप्ते द्विवसुशैलरसाद्रिवसुरसर्तुत्रिद्वि (२३६६८७६७-८२) सङ्ख्यो बुधवारान्तान्त· सृष्ट्यादिर्दिनव्रज । एष पञ्चमकाल । एवमेतेषुपञ्चकालेषुयथास्वभगणेति (सूर्यसिद्धान्ते. १ अध्याये श्लो ५३) सूर्यसिद्धान्तोक्तप्रकारेणानीत रविभगणशेष नियुताहताष्टकरक्ष्माभृन्मही (१७२८००००००) सम्मित भवति । एव सूर्यस्य राश्यादिशेषैरन्येषा-भगणादिशेषैर्वारकुट्टाकार कर्तव्य । अथ वारकुट्टाकारवेलाकुट्टाकारयो को वा विशेष· उच्यते वारान्तकालजनित ग्रह वा ग्रहभगणादिशेष वाऽवलम्ब्य वारकुट्टाकार· प्रवर्तते । वारान्तकालादन्यकालजनित ग्रह वा भगणादिशेष वाऽवलम्ब्य वेलाकुट्टाकार प्रवर्तते इति ॥

अथ वेलाकुट्टाकारः प्रदर्श्यते । तत्रादौ वेलाया ग्रहभगणादिशेषाणि ज्ञातव्यानीति, तदानयनमुच्यते । भागानुबन्धजातौरूपगुणच्छेद-गुणस्वांशयुतेष्टदिनवृन्दतत्रत्येन च्छेदेन गुणयित्वा तदंशयुक्त कृत्वा तच्च ग्रहयुगभगणैस्सगुण्य तत्रत्यच्छेदाभिहतैर्युगभूदिनैर्विभजेत् । लब्ध भगणा भवन्ति तस्मिन् द्वादशादिगुणिते पूर्ववद्विभक्ते च लब्धं राश्या-दय. शेष राश्यादिशेषम् । उदाहरणम् । अत्र कल्पितस्वच्छेदांश-सहितोऽभीष्टो दिनगण , $\frac{१३५२}{\frac{१}{२}}$ । अत्रोपरि पङ्क्तिस्थो रूपगुण. स चात्र द्वीषुविश्व (१३५२) सङ्ख्य । मध्यमपङ्क्तिस्थोंशः । सपुनरिह रूप (१) मित. । अथ रूपगुणे (१३५२) तत्रत्ये न छेदेन (२) गुणिते (२७०४) तत्रत्येनांशेन च (१) युक्ते जातो राशि· पञ्चाभ्रभ (२७०५) सम्मित. । अस्मिन् बुधयुगभगणै. खचतुष्करदार्णवैः (४३२००००) गुणिते (११६८५६०००००) तत्रत्यच्छेदेन द्विकेन गुणितैर्युगभूदिनैः

षड्बाणरसार्थाग्न्यष्टेषु तिथ्यग्नि(३१५५८३५६५६)सङ्ख्यैर्विभक्ते लब्धा भगणास्त्रय । शेष दन्त-खाग्नचङ्क खाष्टेन्दुद्विद्वि (२२१८०९३०३२-सङ्ख्यम् । एतदेव बुधस्य भगणाग्रम् । एतास्मिन् द्वादशादिगुणिते पूर्ववद्विभक्ते च लब्ध राश्यादयो भवन्ति शेष राश्यादिशेष भवति अत्र यद्भगणशेष तदधुनोद्दिश्यते ॥

लङ्कामध्याह्नकाले हिमकिरणतनूजन्मनो मण्डलाग्र
दन्ताभ्राग्नचङ्कखाष्टक्षितिनयनभुजासङ्ख्यमासीदमुष्मात् ।
पर्यायानस्य यातानभिमतदिवसव्यूहमशेन युक्त
वेलाकुट्टोपदेशो बलवदवगतश्चेत् त्वया ब्रूहि शीघ्रम् ॥ ३१

अथैतत्प्रश्नभङ्गाय सार्धमार्याद्वयमाह—

वेलाकुट्टाकारे छेदाम्यस्न कुवासरश्छेद ।
प्रक्षेपभाज्यराशी पुनरस्मिन् वारकुट्टवद्भवत ॥ ५४
एभिस्सम्पाद्येते यौ फलगुणकौ तयोः फल त्वत्र ।
उद्दिष्टशेषवशतो गतभगणादिर्भवेदिह गुणस्तु ॥ ५५
छेदहृतो दिवसगणश्शिष्ट तच्छेदयोगिनोंशास्स्यु ।

अस्मिन् वेलाकुट्टाकारे मण्डलादिशेषानयने ।
"भागानुबन्धजातौ रूपगुणश्छेदसगुणस्सांशः"

इत्यत्र यश्छेदस्तेन गुणिता युगभूदिवसा भाजको भवति । वार-कुट्टाकारे भगणादिशेषेषु क्षिप्तेषु सत्सु तत्र यौ क्षेपभाज्यावुक्तौ ताव-त्रापि समानौ एतैर्भाजकक्षेपभाज्यैर्यौ फलगुणावुत्पद्येने तयोः फलन्त्विह भगणशेष उद्दिष्टे सति ग्रहभुक्तभगणा भवन्ति । राशिशेषेतूद्दिष्टे तत्फलं ग्रहभुक्तराशय. । भागशेषे पुनरुद्दिष्टे तत्पुनर्ग्रहभुक्तभागाः । लिप्ताग्रे पुनरुद्दिष्टे तत्तु ग्रहभुक्तलिप्ता । विलिप्ताग्रेतूद्दिष्टे सति तत्फल ग्रहभुक्तविलिप्ता भवन्ति । अत्र यो गुणस्तस्मिंस्तु भगणाद्यग्रानयने

"भागानुबन्धजातावित्यत्र यच्छेदस्तेन विहृते सति लब्धमिष्टदिनानि भवन्ति शिष्ट तच्छेदसम्बन्धिनोंशा भवेयुः । उदाहरणम् । बुधस्योद्दिष्ट भगणशेषमिदम् २२१८०९३०३२ अयमृणक्षेप. । अत्र भगणशेषोद्दिष्टत्वात् बुधस्य युगभगणा इमे ४३२०००० भाज्यराशिः । इह चक्रशेषानयने "भागानुबन्धजाता" वित्यत्र छेदो द्विसम्मितः, अतो द्विगुणिता भूदिवसा एते "३१६५८३५६५६" भाजकराशि । एवमेतै. क्षेपभाज्यभाजकैः पूर्ववदानीत फल त्रिसाम्मितम् । एतद्बुधभुक्तभगणा । गुण' पञ्चाभ्रभ (२७०५) सम्मित' । एतस्मिंस्त्विह चक्रशेषानयने "भागानुबन्धजाता" वित्यत्र द्विसम्मितेन च्छेदेन विभक्ते लब्ध द्वीषुविश्व (१३५२) सङ्ख्य जातम् । एतदभीष्टदिनगणः । शिष्ट तच्छेदसम्बन्ध्यशोरूपमितो जात' । एव छेदाशसहितो दिनगणोयम् $\frac{1352}{\frac{1}{2}}$ । इत्थं वार द्व्यशे कुट्टाकार प्रदर्शित ।

एवमनेन न्यायेन वारत्र्यश वारचतुरश वारपञ्चाश वारषडशादिषु कुट्टाकारो योज्य. । अथ वारषष्ठ्यंशे लिप्ताशेषाश्रयणेनोद्देशक ॥

लिप्तायामर्धरात्रात्प्रभृति विघटिकासप्तशत्यां गताया
सैकाया खाभ्रतर्कत्रिगुणकृतशराष्टाभ्रशैलैक नागाः ।
लिप्ताग्र सूर्यसूनोस्समभवदमुनावासरानंशयुक्तान्
लिप्तान्तं सूर्यसूनुकथय विघटिकाकुट्टवेदिन्ममाशु ॥३२॥

अत्रेद शनैश्चरस्य कलाशेषम् ८१७०८५४३३६०० अयमृणक्षेपः । तस्य युगभगणा भुजङ्गषड्पञ्च रसवेदनिशाकरा १४६५६८ (सूर्यसिद्धान्ते १ अध्याये श्लोक. ३२) भाज्यराशि वारस्यखखषड्रामांशो ३६०० विनाडीति खखषड्रामगुणिता युगदिवसा इमे ५६८०५०४१८०८०० भाजकराशिः । एभिः क्षेपभाज्यभाजकै पूर्वव-

# शास्त्रतत्त्वम्

करणत्रयसारूप्यमार्जव विदुषां धनम् ।
शास्त्रतत्त्वपरिज्ञानाचत्सिद्धिरिति निर्णयः ॥

दृष्ट सर्वमदृष्टयन्ति जडताकाष्ठां गतां केचना-
दृष्ट केचन दृष्टयन्ति सकलं नास्तिक्यकाष्ठा गताः ।
दृष्टादृष्टविवेकनिर्मलधियो मीमांसका ये पुन.
तेषामेव वच प्रकाशयति न शास्त्रस्य तत्त्व स्फुटम् ॥

## लोकवेदविभाग.

तदुक्त तन्त्रवार्तिके ८५ पु —

लोकायतिकमूर्खाणा नैवान्यत्कर्म विद्यते ।
यावत्किञ्चिददृष्टार्थं तद्दृष्टार्थं हि कुर्वते ॥ इत्यादि ।

तस्मात्सर्वेषु शास्त्रेषु दृष्टादृष्टविवेक कर्तव्य । तदप्युक्तं तत्रैव ७९पु. "यावद्धर्ममोक्षसम्बन्धि तद्वेदप्रभवम् । यत्त्वर्थसुख-विषय तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यम् । तेन सर्वस्मृतीना प्रयोजनवती प्रामाण्यसिद्धिः । . . . . कल्पसूत्रेष्वपि लोकव्यव-हारपूर्वकाश्च केचित् ऋत्विगादि व्यवहारा. सुखार्थहेतुत्वेनाश्रिता." इति ॥

तथा—९९९पु.

ऋत्विग्भ्यो दक्षिणां दद्यादिति दान विधीयते ।
लोभादेवार्जनाङ्गत्वात् प्राप्तस्तेषा प्रतिग्रह. ॥

नहि विधिशतेनापि तथा पुरुष. प्रवर्तते यथा लोभेन । इति ॥

तथाच मानुषाणां प्रवृत्तिः द्विविधा लोभमूला शास्त्रमूलाचेति ॥ तदेतत् जैमिन्यापस्तम्बादिभिरेव निरूपितं—जै सू-४-१-२ "यस्मिन् प्रीति पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात्" ॥

शाबरभाष्यम्—"यस्मिन् कृते पदार्थे पुरुषस्य प्रीतिर्भवति स पुरुषार्थपदार्थ । तस्य लिप्सा अर्थेन च भवति न शास्त्रेण । ऋत्वर्थो हि शास्त्राद्गम्यते, नान्यथा । अविभक्तो हि पुरुषार्थ. प्रीत्या । योय प्रीतिसाधन स पुरुषार्थः ॥

अत्र द्रव्यार्जनमुदाहरणम्—इह द्रव्यार्जन तैस्तैर्नियमै· श्रूयते ब्राह्मणस्य प्रतिग्रहादिना । राजन्यस्य जयादिना । वैश्यस्य कृष्यादिना । तत्र सन्देह किं ऋत्वर्थो द्रव्यपरिग्रह.? उत पुरुषार्थः? इति ॥

एतस्मिन् कृते पदार्थे प्रीति पुरुषस्य भवति । तस्मादस्य लिप्सा अर्थलक्षणा शरीरधारणार्था । यस्य शरीर ध्रियते व्यक्त तस्यास्ति द्रव्यम् । शरीरिणश्च याग श्रूयते । तस्माद्विद्यमानद्रव्यस्य विनियोग उच्यते, न द्रव्यार्जन श्रुतिगृहीतम् । विनापि द्रव्यार्जन-वचनत्वेन शब्दस्य यागो निर्वर्तेत एव । तस्मात्पुरुषार्थ द्रव्य-परिग्रह." इति ॥

मिताक्षराव्यवहारे १०५ श्लोक चात्र पश्यन्तु ॥ तथा—जैमि. सू. १-३-६. "अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्" ॥

भा—वसन्तोत्सवाद्यनुष्ठातॄणा विप्रलिप्सादिरूपाणामप्रामाण्य-कारणानामदर्शने सति प्रयुक्तानि अनुष्ठितानि कर्तव्यानीत्येव प्रतीयेरन् । इति ॥

अत्रागमप्रामाण्ये ६० पुटमपि पश्यन्तु ।

एवमुक्त सूत्रद्वयस्यार्थं आपस्तम्ब एवं सूत्रयामास धर्मे १-१२-८, ११. "यस्मिन् प्रीत्युपलब्धित प्रवृत्ति न तत्र शास्त्रमस्ति । आर्यसमयो ह्यगृह्यमाणकारण " इति ॥

तस्याय शास्त्रकृता सग्रह –" अप्राप्ते हि शास्त्रमर्थवत्" इति ॥

तथा च वीरमित्रोदये परिभाषाकाण्डे १६पु भविष्यपुराण-वचनमेवमुदाहृम्—

दृष्टार्था तु स्मृति· काचिददृष्टार्था तथापरा ।
दृष्टादृष्टार्थरूपान्या न्यायमूला तथापरा ॥
अनुवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी ।
सर्वा एता वेदमूला दृष्टार्था परिहृत्य तु ॥ इति ।

अत एव भर्तृहारिणापि वाक्यपदीये एवमुच्यते—

स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजना ।
तमेवाश्रित्य लिङ्गेभ्य वेदविद्भि प्रकाशिता· ॥ इति ।

अपिच स्मृतिचन्द्रिकाव्यवहारकाण्डे २४ ५४पु. 'प्रमाणान्तरदृष्टार्थविषया स्मृति अर्थप्रधानत्वादर्थशास्त्रतयाऽभिप्रेता" इति । तथाचेद सुसङ्गत भवति—

धर्मार्थं सञ्चयो यस्य द्रव्याणा सप्रशस्यते ।
तपस्सञ्चय एवासौ विशिष्टो द्रव्यसञ्चय ॥

इति सप्तर्षिसवादे—

योऽसाधुभ्योर्थमादाय साधुभ्यस्सम्प्रयच्छति ।
स कृत्वा प्लवमात्मानं सन्तारयति तावुभौ ॥

इति मनुस्मृतौ ११ अ —

तथा अदृष्टार्थतयाभिप्रेतेपि शास्त्रे युक्तियुक्त एव विचार· कर्तव्य इत्याहु बृहस्पति मनु पितामह नारदादय·—

केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः ।
युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥
केवलं शास्त्रमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारस्सविज्ञेयः धर्मस्तेनापहीयते ॥

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥
प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥

असत्यास्सत्यसंकाशास्सत्याश्चासत्यसन्निभाः ।
दृश्यन्ते भ्रान्तिजनकाः तस्माद्युक्तं परीक्षणम् ॥

तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।
न तलं विद्यते व्योम्नि न खद्योतो हुताशनः ॥
तस्मात्प्रत्यक्षदृष्टेऽपि युक्तमर्थान्परीक्षितम् ।
परीक्ष्य ज्ञापयन्नर्थान्न धर्मात्परिहीयते ॥ इति ॥

कुमारिलस्तु—

स्तुतिवाक्यकृतश्चैष जनानां मतिविभ्रमः ।
पौर्वापर्यापरामृष्टश्शब्दोऽन्यां कुरुते धियम् ॥

वाक्यपदीये—

अर्थात्प्रकरणाल्लिङ्गादौचित्यादर्थनिर्णयः ।
रूपमात्राद्धि वाक्यार्थः केवलान्नावतिष्ठते ॥

कात्यायनः—

श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी ।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत्तदा ॥

स्मृतेर्वेदविरोधेन परित्यागो यथा भवेत् ।
तथैव लौकिकं वाक्य स्मृतिबाधात्परित्यजेत् ॥

पराशरमाधवीये—केवल मनुष्यबुद्धेरप्रयोजकत्वमुक्तम्—

कल्पिका मानुषी बुद्धिस्सा च न व्यवतिष्ठते ।
अत एव निबन्धेषु दृश्यते नैकवाक्यता ॥
कपिलो यदि सर्वज्ञ कणादो नेति का प्रमा ।
इति न्याय· प्रसज्येत बुद्धिमात्रव्यवस्थितौ ॥

इति । भारते तु सभा ५५. अ—

यस्य नास्ति निजा प्रज्ञा केवल तु बहुश्रुत ।
न स जानाति शास्त्रार्थं दर्वी पाकरस यथा ॥
एक यदि भवेच्छास्त्र ज्ञान निस्सशय भवेत् ।
बहुत्वादिह शास्त्राणां ज्ञानतत्त्वं सुदुर्लभम् ॥

ततश्च दृष्टादृष्टविभेदेन लोकवेदविभाग· कर्तव्य सर्वत्र शास्त्रेषु । तत्र दृष्टार्थे शास्त्रे देशकालसदर्भानुसारेण यथारुचि परिग्रह । अन्यत्र तु मात्रयापि रुचेरनवकाशः ॥ इति ॥

## लोकविभागः

एवं लोकवेदविवेके सति लोकस्वरूपं सुप्रसिद्धमपि तत्रावश्यज्ञातव्योंश एष·—

न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतर· ॥

इति महाभारते उद्योगे कालदेशपरिज्ञानमेव बुद्धे प्रयोजनम् । न तु केवलमर्थार्जनमित्युक्तम् । कालदेशपरिज्ञाने सत्येव लौकिकोऽपि भवति पुरुषः । अन्यथा नापि लौकिक· नापि परीक्षक इत्युन्मत्तवदुपेक्ष्येत ॥

तत्र यथा कालस्त्रिविधः तथा देवमनुष्यपातालभेदेन देशोपि त्रिविध. उत्तममध्यमाधमभेदेन वा । तदेतद्देशत्रैविध्यमपि देवमनुष्यासुरविभागनिबन्धनम् । सोपि विभाग कामक्रोधलोभलक्षणै· रागद्वेषमोहानामुत्कटावस्थारूपै. निष्पन्न इति बृहदारण्यकोपनिषदि स्पष्टमुपदिश्यते ॥ बृ. उ. ७-२—

त्रया. प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुः देवा मनुष्या असुरा. । उषित्वा ब्रह्मचर्यं देवा ऊचु ब्रवीतु नो भवानिति । तेभ्यो हैतदक्षरमुवाच द इति । व्यज्ञासिष्टा३ इति । व्यज्ञासिष्मेति होचु. दाम्यतेति न अत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥

अथ हैन मनुष्या ऊचु· ब्रवीतु नो भवानिति । तेभ्यो हैतदेवाक्षरमुवाच द इति । व्यज्ञासिष्टा३ इति । व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवा च व्यज्ञासिष्टेति ॥

अथ हैनमसुरा ऊचुः ब्रवीतु नो भवानिति । तेभ्यो हैतदेवाक्षरमुवाच द इति । व्यज्ञासिष्टा३ इति । व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥

तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्ददद इति दाम्यत दत्त दयध्वमिति । तदेतत् त्रय शिक्षेत् दम दान दयामिति ॥

अयमर्थः—प्रजापतेरपत्यानि त्रिसङ्ख्याकाः देवा मनुष्या असुराश्च प्रजापतौ पितरि शिष्यास्सन्त उषितवन्तः । प्रथमं तेषां मध्ये देवा. प्राहुः—अस्मभ्यं यदनुशासन तद्भवान् ब्रवीत्विति । एवमर्थिभ्यस्तेभ्य. प्रजापतिः द इत्येतदक्षरमात्रमुक्त्वा किं विज्ञातवन्तो यूयमिति पप्रच्छ । विज्ञातवन्तो वयमिति देवा. प्रत्यूचुः । यद्येवमुच्यतां किं मयोक्तमिति प्रजापतावुक्तवति दाम्यतेति भवानस्मान् कथयति यूयं स्वभावेनादान्ता., अतो दान्ता भवतेति अस्माक-

मुपदिश्यते इति । प्रजापतिरप्येतत् श्रुत्वा सम्यग्विज्ञातवन्तो यूय-मित्याहोति ॥

द्वितीयवाक्येपि समानमन्यत् । इयान्विशेष —स्वभावतो लुब्धा मनुष्या , तस्माद्दत्त लोभत्यागरूपं दान कुरुतेत्यस्माकमुपदेशो भवतीति मनुष्या· प्राहु ॥

तृतीयवाक्येप्यन्यत्समानम् । दयध्वमिति । स्वभावत क्रूरा यूयं सदा हिसापरा । अतो दयध्वं प्राणिपु दया कुरुतेत्यसुराणा-मुपदेशस्यार्थ ॥

तदेतत्प्रजापतेरनुशासनमद्याप्यनुवर्तत इत्यत्र स्तनयित्नुशब्दं द द द इत्यात्मकं दैवी वागिति निर्दिशति—तदेतदेवैषेति ॥

अत्राय भाव.—तत्र देवादीनुद्दिश्य किमर्थं दकारत्रयमुच्चा-रितवान् प्रजापति· पृथगनुशासनार्थिभ्य. । ते वा कथ विवेकेन प्रतिपन्ना· प्रजापते मनोगत समानेनैव दकारमात्रेणेति जिज्ञासाया-मिदमवधारणीयम्—मनुष्याणामेवादान्ता ये अन्यैरुत्तमैर्गुणैस्सम्पन्नास्ते देवा लोभप्रधाना मनुष्या । हिंसाप्रधानाः क्रूराः असुराः ॥

अतस्त्रिप्रकारा एव मनुष्याः अदान्तत्वादातृत्वादयालुत्वरूप-दोषत्रयमपेक्ष्य देवादिशब्दभाजो भवन्ति । ते हि स्वदोष जानन्त. तेनापराधितामात्मनो मन्यमानाः शङ्किता एव पितरि शिष्यता-मुपगता. । तैरप्यात्मशङ्कावशेनैव दवर्णोच्चारणमात्रेण अनुशासनं विदितमभूत् । लोकेपि हि प्रसिद्धोय न्यायः चोरचेष्टालक्षणः ॥

अनेनचोपाख्यानेन पुत्राः स्वदोषप्रख्यापनेन पित्रानुशास्या दोषात् निवर्तनीया । तथा—आत्मदोषज्ञाने सति दोषान्निवर्तयितुं शक्यन्तेऽल्पेनाप्युपदेशेनेति च विज्ञायते ॥

## इतिहासपुराणम्

इतिहासपुराणादीन्यप्येतादृशकालदेशविज्ञानायैव प्रवृत्तानीति- न्यायसूत्रभाष्ये वात्स्यायन भाषते—४-१-६२ "विषयव्यवस्थानाच्च यथाविषय प्रामाण्य, अन्यन्मन्त्रब्राह्मणस्य विषय । अन्यच्चेतिहास- पुराणधर्मशास्त्राणामिति । यज्ञो मन्त्रब्राह्मणस्य । लोकवृत्तमितिहास- पुराणस्य । लोकव्यवहारव्यवस्था धर्मशास्त्रस्य विषयः" इति ॥

अत्र धर्मशास्त्रस्य विषयव्यवस्थानिरूपणेन केवलदृष्टार्थता वात्स्यायनाभिमतेति विज्ञायते ॥

एव लोकवृत्तपरिज्ञानायैव प्रवृत्तेष्वपीतिहासपुराणेषु महर्षय· लोकानुग्रहाय बहुविधशास्त्रविचारपरिश्रमावकाशवैधुर्येण श्रुत्यनाधिका- रितया प्रथिताना स्त्रीशूद्रादीनामपि विज्ञानाय महाभारतादिकं प्रणीतवन्त इत्यत्र किञ्चिदुच्यते । इतिहाससमुच्चये प्रथमाध्याये—

प्रायशो मुनयस्सर्वे केवलात्महितोद्यता ।
द्वैपायनस्तु भगवान् सर्वभूतहिते रत ॥
स्तुत्य तस्यास्ति किञ्चान्यत् येन लोकहितैषिणा ।
वेदाव्यस्त कृत चापि महाभारतमद्भुतम् ॥
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
इत्युक्त्वा सर्ववेदार्था· भारते तेन दर्शिताः ॥
समस्तान् स्थापितानर्थांस्तत्रत्यान् दर्शयिष्यतः ।
श्रूयता सिंहनादोयमृषेस्तस्य महात्मनः ॥
धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥ इति ।

तथा मोक्षधर्मे विष्णुपुराणे च—

कृष्णद्वैपायनं व्यास विद्धि नारायण प्रभुम् ।

को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥ इति ॥

स एष खलु महर्षिः व्यासः धर्मतत्त्वविषये "सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवङ्गम" इति श्रीरामेण धर्मविग्रहरूपेणापि प्रशंसिते जैमिन्यादिभिः बहुधा शास्त्राणि प्रणीय निर्णीतेऽप्येवमाह महाभारते (वाक्यपद्यां)

इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥ इति ॥

तर्हि व्यासमहर्षेः हृदयस्थितं धर्मलक्षणं किमित्याकाङ्क्षायां स एवमाह—

श्रूयतां धर्मसर्वस्वं यदुक्तं ग्रन्थकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ इति ॥

एतत्तत्त्वमन्यत्र विस्तृतमिति नेह प्रतन्यते ॥

अत्र प्रत्युदाहरणार्थमितरेषां महर्षीणां मध्ये नारदस्येदं वचनं शृण्वन्तु—(भारते)

अद्य प्रभृति हे लोकाः यूयं यूयं वयं वयम् ।
अर्थकामपरा यूयं नारायणपरा वयम् ॥
नास्ति सङ्गतिरस्माकं युष्माकं च परस्परम् ।
वयं तु किङ्करा विष्णोः यूयमिन्द्रियकिङ्कराः ॥

इत्यादि । एतेन वचनेन व्यासवत् नारदादीनां लोकैकप्रवणता नास्तीत्यवगम्यते ॥

अपि च लोकाविरोधेनैव धर्मेऽपि दृष्टिः कर्तव्येत्याह मनुः ११ अ.

शक्तः परजने दाता स्वजने दुःखजीविनि ।
मध्वापातो विषास्वादः स धर्मप्रतिरूपकः ॥

भृत्यानामुपरोधेन यत्करोत्यौर्ध्वदेहिकम् ।
तद्भवत्यसुखोदर्कं जीवितस्य मृतस्य च ॥ इति ॥

और्ध्वदेहिक जन्मान्तरानुभाव्यफल पुण्य कर्मेत्यर्थ· ॥

आचारः

तत्र श्रौते धर्मे यागदानहोमादिरूपे नास्ति कश्चिदशः अस्माकमिदानीं वक्तव्य· । स्मार्ते पुन वर्णाश्रमादिधर्मरूपे किञ्चिदवश्यमवगन्तव्यम्। स च धर्म· आचार इति समयाचार इति शीलमिति वृत्तमिति च तेषु तेषु शास्त्रेषु व्यपदिश्यते। तदतिक्रमे प्रायश्चित्तमुक्तं सर्वासु स्मृतिषु । तासु च प्रायः आचारः प्रायश्चित्तमिति काण्डद्वय पराशरादिभि· निबद्धमस्ति । व्यवहारकाण्डस्तु अर्थनिबन्धन दृष्टार्थः लोकेऽन्तर्भवति न वेदे इति तद्व्याख्यायां माधवाचार्यः प्राह ॥

तेषु वर्णाश्रमधर्मेषु—

सन्ध्या स्नान जपो होमः देवताना च पूजनम् ।
आतिथ्य वैश्वदेव च षट्कर्माणि दिनेदिने ॥ इति पराशरः ।

अत्राद्यत्रय त्रिकरणशुद्धिः । होम· अनादिसिद्ध· आर्याणाममूर्तदेवतार्चनम्। देवतानां च पूजन समूर्तदेवतार्चनम्। आद्य नैगमिकम्। अनन्तरमागमिकम्। आतिथ्यं पञ्चम मनुष्ययज्ञ· । वैश्वदेव षष्ठ देवयज्ञपितृयज्ञभूतबल्यादिकम्। तत्र ब्रह्मयज्ञ "अध्यापन ब्रह्मयज्ञः" इति मनुराह ॥

अत्र स्मृतिरत्नाकरे २२०पु. "प्रतिग्रहादिपरो विप्रः षट्कर्मा इति वादस्तु धर्मशास्त्रानभिज्ञत्वकृत·" इति वैदिकसार्वभौम प्राह ॥

स खलु वर्णाश्रमधर्म· साक्षाद्धर्मो वा? उत धर्मासधनामिति जिज्ञासायां (३-१-९) श्रीभाष्ये—"केवलादाचारात् सुखदुःखप्राप्त्यसम्भवात् सुखदुःखे हि पुण्यपापरूपकर्मफले । तद्धेफलत्वा

दाचाराणां स्मृतिविहिताना वैयर्थ्यमितिचेन्न । यत आचारवत एव पुण्यकर्मस्वाधिकारः । अतएव 'आचारहीन न पुनन्ति वेदा. । सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु' इत्युच्यते । अतएवच —'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि । यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि' 'इति भेदेन निर्देश' इत्यादिना कार्ष्णाजिनिमतमुपपाद्य आचारानुमितश्रुतिविहितसन्ध्यावन्दनादे. कर्माधिकारसम्पादन फलम्" इति सिद्धान्त. सूचित ॥ ३-१-९.

अत एव पराशरमाधवीये —१-३७ श्लोके—

चतुर्णामपि वर्णानामाचारो धर्मपालक. ।
आचारभ्रष्टदेहाना भवेद्धर्म पराङ्मुख. ॥

इत्यत्र—"शिष्टानामाभिमत दयादाक्षिण्यविनयाद्यन्वित' वृत्तविशेषः आचार इत्युक्त भवति । स चाचार श्रौत स्मार्त च धर्म पालयति । धर्मविघातिना नैर्घृण्यक्रोधादीनामभावात् । असति त्वाचारे विरोधिसद्भावात् धर्म एव न प्रवर्तते । तत्कथंचित्प्रवृत्तोपि परावर्तते । सोऽय धर्मपालक आचार. चतुर्णां वर्णानां साधारण" इति स्पष्टमुक्त वर्णाश्रमाचारादितत्त्वम् ॥

अतएव—तेनैवाचार्येणैवमुच्यते—

देशभेदात्कालभेदात्पुंभेदादन्यथान्यथा ।
पर्यवस्यति शास्त्रार्थ इति पूर्वमवादिषम् ॥ इति ।

पराशर एव महर्षिः परमकृपालुतया युगान्तरीयाचारापेक्षया कलियुगीयमाचार समकोचयत्, व्यतिक्रमे प्रायश्चित्तमपि स्मरति । आचारोपि साक्षाद्धर्मश्चेत् नैव देशकालाधिकारिभेदाद्भिद्येत । सर्वेषु तेषु अविपर्यस्तस्वभाव एव हि धर्मो नाम ॥

अतएव गौतमादिभि "देशजातिकुलधर्मा" इत्यपि निर्देश कृतोस्ति ॥

अतएव एतेषां नित्यकर्मत्व, अङ्गवैकल्येपि यथाकथञ्चित् अनुष्ठेयत्व शास्त्रेषूच्यते। तथाचाचारो वैकल्यसह इति सिद्ध भवति। अनुष्ठानमप्येवमेव वर्तते इत्यलम् ॥

एतेन "अथकर्मण्याचाराद्यानि गृह्यन्ते, अथातस्सामयाचारिकान् धर्मान्व्याख्यास्याम" इत्यादिना शास्त्रेणोक्तानि निषेकादीनि गृह्यकर्माणि, सन्ध्ययोर्बहिःग्रामादासनादीनि च व्याख्यातानि ॥

वर्णाश्रमधर्म स्मार्त इति स्पष्टमुच्यते वायुपुराणमत्स्यपुराणयोः— ५९, १४४.

नस्मात् स्मार्तः स्मृतो धर्म वर्णाश्रमविभागशः।
स एष द्विविधो धर्मः शिष्टाचर इहोच्यते ॥ इति ॥

द्विविध. श्रौत स्मार्त ॥

आचारोदाहारणम्

अत्र कानिचिदुदाहरणानि। वैदिकसार्वभौमीये सुधीविलोचने—

"यत्राम्नातं स्वशाखायां यथोक्तमविरोधि च।
विद्वद्भिस्तदनुष्ठेय अग्निहोत्रादिकर्मवत् ॥

अतः स्वगृह्यानुक्त गृह्यान्तरोक्त अविरुद्धमनुष्ठेयमेव। यथोपनीतावुपवीतम्। यथाचोपाकर्माणि क्षौरं ब्रह्मचारिणाम्। यथाच सन्धावन्दनगायत्र्यादि। (विवाहे माङ्गल्यधारणम्)। नह्येतान्यापस्तम्बोक्तानि। तथाप्येतानि शिष्टा आचरन्त्यविरोधात्" इति ॥

सच्चरित्ररक्षायां—२८ पुटे—

वैणवीं धारयेद्यष्टिं सोदक च कमण्डलुम्।
यज्ञोपवीतं वेद च शुभे रौक्मे च कुण्डले ॥

इति मनुविहितेषु यष्ट्यादिषु यज्ञोपवीतातिरिक्तानां कतिपयशिष्टैरधारणात्, इति लिखितमस्ति। एतेन विज्ञायते—आचार तदा तदा विपर्यस्यतीति ॥

पुत्रप्रतिग्रहविषये—आपस्तम्बधर्मे २-१३-१० ' दान क्रयधर्मश्चापत्यस्य न विद्यते " इति सामान्येन प्रतिषेधो दृश्यते । अथापि तत्र कालविषये—जननसमये दान केचिदनुजानन्ति । केचित् नामकरणात्प्राक्, तथा चौलात्प्राक् उपनयनात्प्राक्, विवाहात्प्राक्, पुत्रजननात्प्राक्, कुटुम्बस्यापि दान केचिदाहु । निषेधवचसामप्रशस्तत्व सम्पत्कालविषयत्व वा सिद्धान्तयन्ति ॥

ग्राह्यविषये—भ्रातृपुत्रादि । तत्र कनिष्ठ ज्येष्ठोऽपि समानोदक, असगोत्र, दौहित्र, भागिनेय, कन्यापीति । एव दातृविषये प्रतिग्रहीतृविषयेपि शतशो विकल्पास्सम्भवन्ते ॥

एवंस्थिते दत्तचिन्तामणौ व्यक्तमेतत्तत्त्वम् - " पुत्रदानं दृष्टार्थं दानस्य रागप्राप्तत्वेन अविधेयत्वात् । धनलाभादिदृष्टप्रयोजनसम्भवेन अदृष्टार्थत्वस्यान्याय्यत्वात् । दाने इतिकर्तव्यताविशेषश्च भोजनाश्रितदिङ्नियमवदुपपत्ते " इति । तत्रापि गृहाद्बहि होमविधान राजनि चावेदनम्, इत्यादय प्रसिद्धिलक्षणदृष्टार्था एव ॥

अत्रापि चैते सिद्धान्ता:—प्रतिग्रहेण पालकनिरूपित लौकिकमेव स्वत्व यथेष्टविनियोगार्हत्वरूपमुत्पद्यते । तत सस्कारादिना दैविकपैतृककर्माधिकारलक्षण योग्यत्व जायते । औरसजनने तत्प्रतिबध्यते । जनककुले पुत्रान्तराभावे सति सहजसिद्ध योग्यत्वमुत्तेजकस्थानीयेन निराकाङ्क्षाभावेनाभिव्यज्यते । पुत्रान्तरसत्त्वेप्यौरसजनने जनककुल एव श्राद्धाद्यधिकार । न पालककुले । परिग्रहानन्तरमपि

उपनयनात्प्राक्परित्यागे जनककुल एव सहजसिद्ध योग्यत्व प्रतितिष्ठति । उपनयनानन्तर परित्यागे त्रिशङ्कुगतिरेव गति.॥

अत्र सर्वत्र माध्यस्थ्येन परीक्षाया पुत्रदान पश्वादिदानान्नातीव विभिद्यते । एतेन कन्यादानमपि व्याख्यातम् ॥

आचारविषये इदमेकमुदाहरण विलिख्य विरम्यते—(चतुर्वर्गचिन्तामणौ परिशिष्टे ३८१ पु)—“कन्यादानप्रतिग्रहेषु स्वशाखीयैरेव व्यवहरन्त. परशाखीयांश्च प्रयत्नेन वर्जयन्त दृश्यन्ते शिष्टा' । तेन ज्ञायतेऽस्त्यत्र नियम इति ॥

मैवम्—शिष्टव्यवहारस्य कुलाभिज्ञानाज्ञानमूलकत्वात् । तयोश्च सनिधानव्यवधानाधीनत्वात् । प्रायेण हि तुल्यशाखिन तुल्याचारविशेषा. स्वाध्यायाध्ययनसध्योपासनादिकलापविचारणार्थं समानदेशवासिनो भवन्ति । सन्निधानाच्च विज्ञातकुलशीलाचारा परस्पर सबन्धमाद्रियन्ते । अन्यशाखीयास्तु देशान्तरवासादेव अविज्ञातस्वरूपतया न श्रद्दधते । अविज्ञातपरपराणामेकशाखाध्यायिनामपि नोपलभ्यन्ते विवाहादिसबन्धा । अतस्समानदेशवासादिसमुत्थकुलादिविज्ञानमेव सबन्धप्रवर्तकमिति ॥

या तु केषांचित्सत्यपि सादृश्ये न संबन्ध , तत्रैतान्निदानम् । येषां पूर्वपुरुषै अतिदूरानेकदेशवासिभि विगर्हितेतरेतरदेशाचारै कालान्तरे कथचन सहवास मासादयद्भिरपि स्वस्वकुलश्रैण्यहकारसमुद्वहद्भि' अन्योन्य न प्रवर्तते विवाहविधि । ततस्तत्सन्तानेष सैवाप्रवृत्ति कियन्त कालमनुवर्तते । अतो न कन्यादाने स्वशाखीयद्विजनियम इति” । इत्यलबहुना ॥

इदमत्र सर्वशास्त्रहृदयम्—गौतमधर्मे ८-१३. “गर्भाधानपुंसवनसीमन्तोन्नयनप्रभृत्यष्टौ । चत्वारि वेदव्रतानि । स्नान सहधर्म-

चारिणीसंयोग । पञ्च महायज्ञा । सप्त पाकयज्ञसंस्था । सप्त हविर्यज्ञसंस्था । सप्त सोमसंस्था । इत्येते चत्वारिंशत्संस्कारा । अथाष्टावात्मगुणा दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति ॥

यस्यैते चत्वारिंशत्संस्कारा नचाष्टावात्मगुणा न स ब्रह्मणस्सायुज्य सालोक्य च गच्छति । यस्य तु खलु संस्काराणामेकदेश । अष्टावात्मगुणा अथ स ब्रह्मण सायुज्य सालोक्य च गच्छति ॥ इति स्मर्यते ॥

ततश्च श्रुतिस्मृतीतिहासपुराणाचारादिशास्त्राणा सर्वेषामात्मगुणाष्टकपर्यवसान परममुद्देश्यमिति सर्व समञ्जसम् ॥

लक्ष्मीपुर श्रीनिवासविपश्चिच्चक्रवर्तिना ।
शास्त्रतत्त्वमिद व्यक्तीकृत विद्यावता कृते ॥

श्रीवासुदेवार्पणमस्तु

---

# कुवलयानन्दपाठसंशोधनम्

———

V

१ कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्पराकेयम् ॥

इदञ्च पद्य कुवलयानन्दे विशेषालङ्कारप्राथमिकभेदलक्ष्यत्वेनोदाहृतम् । अस्मिश्च श्लोके पूर्वार्धे पाठभेदा तत्रतत्राकारग्रन्थेषु दरिदृश्यन्ते । तथाहि इदमेव पद्य चित्रमीमासाया रूपकातिशयोक्तिप्रकरणे लक्ष्यते । पाठम्तु आभिन्न एव । चेदपि अर्थसाङ्गत्य पूर्वार्धे नावकल्पते । अनम्भसि=अनुदके देशे, कमल=तत्त्वेनाध्यवसित कान्तावक्र वर्तते । कमलेच कुवलय तत्त्वेनाध्यवसित नेत्रं (लक्ष्यते) । एतानि=कमलकुवलये, कनकलतिकायां=तत्त्वेनाध्यवसिताया कामिन्यामिति व्याख्येयम् । तत्र तावदेतानीत्यनेन बहुवचनेन कमलकुवलये परामृष्टु नार्हे । अतः कुवलय इति द्विवचनान्त पाठं समादरणीय. । तदा एतानत्यिस्यानुगुण्य युज्यते । चन्द्रिकायां हि कुवलये इति द्विवचनान्तपाठ एव स्वीकृत., तथैव काव्यप्रकाशिकाया पाठ. अतिशयोक्तिप्रकरणे लक्ष्यते । एवञ्चार्थानुगुण्यमेतानीत्यस्य सुसम्पादम् । चेदपि काव्यप्रकाशे 'कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायम्' इत्येव पाठ अनुभूयते । अत्र द्वितीयपादादौ निरर्थकचकारस्य श्रोतृजनमानसोद्वेजकस्य 'न पादादौ खल्वादयः' इति पर्युदस्तस्य श्रवण हेयमिति समापतति , न च आर्याछन्दासि दळद्वयवत्त्वेन व्यवहार., न तु पादचतुष्टयवत्त्वेन ।

तथाच वामनसूत्रमत्र न प्रसरतीति वाच्यम्। वृत्तरत्नाकरे आर्याछन्दसि दळद्वयव्यवहारस्य जागरूकत्वेपि श्रुतबोधादौ यस्या पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादशद्वितीये चतुर्थके पञ्चदश सार्या। इत्यादिनार्यावृत्तेऽपि पादचतुष्टयव्यवहार प्रामाणिक इति गम्यते। एवञ्च काव्यप्रकाशस्थपाठोऽपि न साधीयान्। काव्यप्रकाशापेक्षया प्राचीने व्यक्तिविवेक (८४ पृष्ठे) 'कमलमनम्भसि कमले कुवलयेतानि कनकलतिकायाम्' इति सुष्ठु पाठ उपलभ्यते। अस्मिश्च पाठेऽर्थसाङ्गत्यस्य समुचितत्वेपि वृत्तवैगुण्य सूक्ष्मेक्षिकया निरीक्षितु शक्यते। पूर्वोक्तश्रुतबोधस्य अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या' इति लक्षणवचनानुसारेण 'कुवले एतानि कनकलतिकायम् इत्येव पाठ स्वीकर्तुमर्ह। पाठेऽस्मिन्नपि कुवले इत्यस्यासाधुत्वमितिचेन्न, 'कुवालय कुवल्य कुवाल कुवलञ्च नदि' ति द्विरूपकोशानुसारेण कुवलशब्दस्य साधुत्वानुशिष्टे, कुवल तूत्पल कुवमिति त्रिकाण्डशेषस्य अमरसुधास्थ कुवल चोत्पले मुक्ताफलेऽपि बदरीफले' इति कोशस्य च दर्शनात्, अनेकार्थ कैरवाकरकौमुद्यादौ प्रयोगाच्चेति 'कमलमनम्भसि कमले कुवले एतानि कनकलतिकायम्' इत्येव पाठ साधीयानिति भाति। इदञ्च पद्य शङ्करगणस्येति सुभाषितावळ्यादौ दृष्टम्। व्यक्तिविवेके तु प्रदर्शितेऽस्मिन् श्लोके पाठान्तरपरिष्कारोऽपि निरूपित, कमलमनम्भसि तस्मिन् कुवलये तानि कनकलतिकायाम् इति। यतोऽत्र श्लोके पूर्वोपात्तपदार्थाना. तानि कनकलतिकाया सा च सुकुमार सुभगा इति उत्तरत्र निर्देशेन पूर्वत्रापि तस्मिन्कुवलये इत्येव निर्देशस्साधीयान्। तथाच व्यक्तिविवेके द्वितीयविमर्शे (८४–८५ पृष्ठे) 'कमलमनम्भसि अत्र हि द्वितीय कमलार्थ सर्वनामवाच्य तस्य यत्स्वशब्देन वचन स वाच्यवचन दोष.।

तेनात्र 'तस्मिंश्च कुवलये इति युक्तः पाठः श्लो 'सर्वनामपरामर्शविषये योऽर्थवस्तुनि। स्वशब्दवाच्यनादोषः स वाच्यवचनाभिधः।' इत्यादिग्रन्थप्रामाण्यात्। सुष्ठुतरपाठस्तु 'कमलमनम्भसि तस्मिन् कुवले एतानि कनकलतिकायामि' त्येवेति सुधियो विदाङ्कुर्वन्तु ॥

२ लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः। एषापि स्वगुणानुरूपरमणाभावाद्वराकी हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता ॥

इदं पद्यं कुवलयानन्दे व्याजनिन्दालङ्कारप्रकरणे उदाहृतम्। ध्वन्यालोके तृतीयोद्योतेऽपि पद्यमिदमुपलभ्यते 'एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हतेति ध्वन्यालोकस्थः पाठः, कुवलयानन्दे तु एषापि स्वगुणानुरूपरमणाभावादिति पाठः अनयोः पाठयोः कतरदुपादेयमितिविचिकित्सा, मनीषिणामुन्मिषति। तत्राकरग्रन्थप्रामाण्यात् एषापि स्वयमेव तुल्यरमणाभावादिति पाठ एव ज्यायान् इत्यभ्यूहितुं प्रगल्भते विदग्धजनः। तथाहि—राजानकानन्दवर्धनाचार्यैः 'तथाचायं धर्मकीर्तेः श्लोक इति प्रसिद्धिः सम्भाव्यते च तस्यैवेत्याख्यातम्। अत्र च व्याजस्तुतिरलङ्कार इति कथनं न चतुरस्रम्। किन्तु अप्रस्तुतप्रशंसा इति निर्णयदशायां तैरेवानन्दवर्धनाचार्यैः 'तस्य एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हतेत्येव विधोक्त्यनुपपत्तेरित्यादिना श्लोकस्य तार्तीयीकः पादः अनूद्य विवृतः। तद्व्याख्याकृता लोचनकारेणापि 'एषापीति, यत्स्वयं निर्मीयते तदेव च निहन्यत इति महद्वैशसमपिशब्देन एवकारेणचोक्तः तुल्यरमणाभावादिति स्वात्मन्यत्यन्तमनुचितं, आत्मन्यपि हि तद्रूपासम्भावनायाम् रागितायाञ्च पशुप्रायत्वं स्यादिति व्याख्यातम्। एवञ्च पूर्वोक्तव्याख्याने एवकारपरामर्शात् तुल्यरमणा-

भावादित्यनुवादाच्च पूर्वोक्त॰ 'एषापि स्वयमेव तुल्यरमणाभावादिति पाठ सङ्गृहीतव्य इति प्रतिभाति । यद्यपि चन्द्रिकाकारै स्वगुणानुरूपस्य वरस्य अभावाद्धतैव हता इति व्याख्यातम् तथापि तद्व्याख्यान आकरग्रन्थाननुरूपम् । ध्वन्यालोकानुसारेण व्याख्यातुम्तुल्यरमणाभावादित्यस्यात्यन्तमनुचितत्वाच्चेति भाव प्रकटीकुर्वत कुवलयानन्दकृत भाषणस्याप्यननुगुणामिति प्रसिद्ध पाठो वर्जनीय । प्राक्तनलिखितताळकोशेषु 'स्वच्छन्दस्य सखीजनस्य वसत चिन्तानलो दीपित इति द्वितीयपाद परिदृश्यते । स्वेच्छाचारिण उदासीनस्यापि जनस्य हृदये चिन्ताज्वरो निर्मित इति कथनापेक्षया सखीजनस्य हृदये चिन्ताज्वरो निर्मित इत्येतत्साम्प्रतमित्यध्यवसितु शक्यते । एवञ्चास्मिन् श्लोके 'एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हतेति तुरीयपादेन भवितव्यमाकरग्रन्थानुरोधादिति सर्व सुस्थम् ॥

२ आघ्रात परिचुम्बित परिमुहुर्लीढ पुनश्चर्वित त्यक्त वा भुवि नीरसेन मनसा तत्र व्यथा माकृथा । हे सद्रत्न तवैतदेव कुशल यद्वानरेणादरादन्त सारविलोकनव्यसनिना चूर्णीकृत नाश्मना ॥

अयं च श्लोक उल्लासालङ्कारप्रकरणे दीक्षितैरुदाहारि । परिमुहुर्लीढमित्यत्र च्युतिसंस्कृतित्वदोष ज्ञायते । तथाहि रत्न प्रथमत वानरेणाघ्रात तत परिचुम्बित तदनु मुहु परिलीढ इति विवक्षितम् । परीत्युपसर्गस्य लीढ मित्यनेनैव समास कार्य विवक्षितार्थानुरोधात्, नतु मुहुरित्यनेन॰ उपसर्गाणा धात्वव्यवहितपूर्ववृत्तित्वस्य 'ते प्राग्धातो' रित्यादिनानुशासनात् परिमुहुर्लीढमिति उपसर्गाणा व्यवहितप्रयोग व्याकरणशास्त्रविरुद्ध॰ । न च मुद्राराक्षसनाटके 'ऐश्वर्यादनपेतमीश्वरमय लोकोऽर्थत सेवते त गच्छन्त्यनु

ये विपत्तिपु पुन स्तं तत् प्रतिष्ठाशया । इति श्लोके त गच्छन्त्यान्वित्युपसर्गस्य अन्वित्येत्यस्य धातो परीभूतत्व समालोक्यते । अत उपसर्गाणा पूर्वापारीभावस्य, व्यवधानस्य च प्रामाणिककविप्रवेकाभ्युपगतत्वान्न दोषशङ्कावकाश इति वाच्यम् 'बाधे दृढेन्यसाम्यात् किं दृढे तदपि बाध्यता'मिति न्यायेन व्याकरणलक्षणविरुद्धत्वरूपेण बलीयसा दोषेण तदपि कबळीकृतमिति तद्दृष्टान्तप्रदर्शन नातीव समञ्जसम् । अथ 'गतोऽर्धरात्रे परिमन्दमन्द गर्जन्ति यत्प्रावृषिकालमेघा । अपश्यती वत्समिवेन्दुबिम्ब तच्छर्वरी गौरिव हु करोति । 'सन्ध्यावधू गृह्यकरेण' इत्यादि पाणिनिविरचितपाताळविजयग्रन्थप्रयोगात् उपसर्गाणा पूर्वापरीभाव पाणिनेरपि सम्मत' । अन्यथा भगवान् पाणिनि· कथ विरुद्ध पद प्रयुञ्जीतेति चेत् इदमपि गर्भस्रावेणैव गत । पाताळविजयग्रन्थस्य पाणिनिनिर्मितत्वे प्रमाणाभावात्, रुद्रटकृते काव्यालङ्कारे व्याख्याकृता नेमिसाधुना इमे प्रायोगा असाधव इति स्पष्टमभिहितत्त्वाच्च पूर्वोक्तप्रयोगोपपत्ति दु समाधा । तथाच कुवलयानन्दे दोषोद्धार कथ शक्नुयादिति विचारे प्रस्तूयमाने आकारग्रन्थान्वेषणस्वारस्यात्पाठभेद उपलभ्यते । यथा 'आघ्रात परिलीढमुग्रनखरै क्षुण्णच यच्चार्वित क्षिप्त यद्भत नीरसत्वकुपितेनेनति व्यथा मा कृथा । हे सद्रत्नेत्यादि उत्तरार्धपाठ समान एव । अत्रच रत्न वानरेणाघ्रात, परिलीढ-आस्वादित, चर्वित -- भक्षित, उग्रनखरै क्षुण्ण क्षिप्तञ्चेति व्यथा मा कृथा । इत्वन्वयानुसारी अर्थ' स्वरस एवेति सहृदयहृदयसाक्षिकमेतादिति 'आघ्रात परिलीढमुग्रनखरै क्षुण्ण च यच्चर्वित इत्यादिपाठ सुभाषितावळ्यादि प्राचीनग्रन्थेषूपलब्ध सर्वै सादरमाश्रयितव्य इत्यल बहुना ॥

४. एव आघ्रातं परिचुम्बित परिमुहुर्लीढमित्यत्रासाधुत्व

दोषस्य कथमप्युद्धारे कृतेपि 'अन्तर्विष्णोस्त्रिलोकी निवसति फणि-नामीश्वर. सोऽपि शेते सिन्धो सोऽप्येकदेशे तमपि चुळकयां कुम्भ-योनिश्चकारेति पद्ये सारालङ्कारलक्ष्यभूते पूर्वोक्तदोष. समापतित. । तथाहि—इदञ्च पद्यमेकावळ्या दृश्यते । तत उद्धृत्य कुवलया-नन्दे ग्रन्थकारेण सङ्ग्रथित । पाठस्तूभयत्र समान एव । अत्र विद्याधरकृतैकावळीपद्ये 'तमपि चुलुकया कुम्भयोनिश्चकार' त्यादौ त चुलुकया चकारेति वर्तितव्यम्, आमन्तालिट्परा. कृभ्वस्तयोनुप्रयु-ज्यन्ते इत्यर्थक 'कृञ्चानुप्रयुज्यते लिटि' त्यनुशासनस्य जागरूकत्वात् । सूत्रेऽस्मिन् प्रशब्दात् अनुशब्दाच्च व्यवहिता आमन्ता पश्चादेव वा न प्रयुज्यन्ते, एधाञ्चक्रे, बिभराम्बभूविरे. पातयामासत्यादिवत् प्रयु-ज्यन्ते । अत· चुलुकया कुम्भयोनिश्चकारेत्यादिप्रयोग असाधु-रेवेति वैयाकरणा. । अत एव तद्व्याख्याने तरळे महामहोपाध्याय-मल्लिनाथसूरिणि . एवमादिविषये 'निरङ्कुशा खलु कवय' इति कामपि वाचोयुक्तिमनुसन्दधाना जोषमुदासत । ज्ञानेन्द्रभिक्षुप्रभृतयो वैयाकरणा 'त पातया प्रथममासपपात पश्चात्' (रघुकाव्य सर्ग ९ श्लो ६१) प्रभ्रशया यो नहुषचकार ( )

इत्येवमादीन्युदाहरणानि प्रामादिकान्येवेत्युक्त्वा 'विपर्यासनिवृत्त्यर्थं व्यव-हितनिवृत्त्यर्थं चे' ति वार्तिकं प्रमाणयन्त , पश्चात्प्रयोगस्य वा व्यवहित-प्रयोगस्य वा असाधुत्वं निश्चिक्यु । त पातया प्रथममासेति काळि-दासप्रयोगस्य प्रामादिकत्वकल्पनं दुश्शकमिति मन्वानेन जैनेन शरण्यदेवेन दुर्घटवृत्तौ (५७पुटे) पूर्वोक्तप्रयोगस्य कथमपि साधुत्वं प्रकल्पितं । तथाच तदीयो ग्रन्थ· 'कथ तर्हि त पातयां प्रथ-ममासे' ति रघुः, आम्प्रत्ययस्यैवेति न्यासेऽवधारणात्, उच्यते पात-शब्दे उपपदे याते र्विचिद्द्वितीयान्त पातयामिति (विश्वपाशब्दवद्वि-

तीयान्तमिदम्) पातयान्तामित्यर्थ, यद्वा आम्प्रत्ययान्तस्य क्रिया-साधनप्रधानत्वात् तथाविधस्यैव व्यावृत्ति, प्रथममिति तु क्रियावि-शेषण न साधनप्रधान, एवञ्च 'सम्भावया राघवमास वृष्टे' ' इत्यादिं सिद्धम्' इति। इत्थमेव 'तमपि चुलुकया कुम्भयोनि श्चकारेत्य त्रापि चुलुकशब्दरूपादुपपदाद्याधातोर्विच् प्रत्यये कृते 'वेरपृ क्तस्ये' त्यादिनेत्सञ्ज्ञालोपाभ्या प्रत्ययस्य निवृत्तौ चुलुकया चुलुकयौ चुलुकया, चुलुकया चुलुकयौ चुलुकय' इति विश्वपाशब्दवद्रूपा-ण्युन्नेयानीति व्याकरणलक्षणविरुद्धत्वरूप असाधुत्वदोष कथञ्चिन्नि-रसनीय.। अतएव कर्णाटकशब्दानुशासनकारेण (४३२ पृष्ठे) 'अत्र सूत्रे अनुग्रहण अव्यवधानार्थ सस्कृते कृभ्वस्तीनामनुप्रयोगस्य निय-तत्वेपि, क्वचिद्व्यवहितप्रयोग, क्वचित्पूर्वप्रयोग., क्वचित्पूर्वमनेकपदव्य-वधानेपि प्रयोग, यथा—

(क) त पातया प्रथममास पपात पश्चात्।

(ख) प्रचलन्मीनमकर प्रभूततरवारिक.।
चकार कलयामब्धि महानेष नभस्तुलाम्॥

(ग) य चक्रुरिन्द्रास्त्रिदशेन्द्रशैले सस्नापयामुज्वलरत्नपीठे इति प्राचीनजैनकृतिन' प्रयोगश्च प्रदर्शित' इति बहूनां प्रयोगदर्शनात् चुलुकयां कुम्भयोनिश्चकारेति प्रयोग साधुरेवेति सन्तोष्टव्यम्॥

५ रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यै प्रियाया गुणै स्त्वामा-यान्ति शिलीमुखा' स्मरधनुर्मुक्तास्तथा मामपि। कान्तापादतलाहति-स्तव मुदे तद्वन्ममाप्यावयो' सर्व तुल्यमशोक केवलमह धात्रा सशोकः कृतः॥

इदञ्च पद्य व्यतिरेकालङ्कारलक्ष्यत्वेनाङ्गीकृतम्। अत्रच द्वितीय-पादे कुवलयानन्दस्थपाठः 'स्मरधनुर्मुक्तास्तथा मामपीति, ध्वन्यालोके

द्वितीयोद्योते पाठस्तु 'स्मरधनुर्मुक्तास्सखे मामपी'ति। अनयो पाठयोर्दोषाभाववत्त्वेपि स्मरधनुर्मुक्तास्सखे मामपीति पाठ स्वारस्यावह इति भाति। अशोकवृक्ष प्रति स्निग्धतयाभिदधतो वियोगिन तदीयरक्तपल्लवदर्शनसमुज्जृम्भितविप्रलम्भशृङ्गारमनुभवत सखेति सम्बोधन न्याय्यमिति युज्यते। स्मरधनुर्मुक्ता शिलीमुखा मामप्यायान्तीत्यनेनैव वाक्यार्थसामञ्जस्ये तथाशब्दप्रयोगस्य नातीव रमणीयत्वम्। प्रथमपादे तथा शब्दस्याभावेपि अर्थ यथा सुसम्बद्ध तथा द्वितीयेपि पादे स्वारस्योपेत अर्थ सम्भवतीति तथा शब्दप्रयोगस्य नावश्यकता। केषुचित्कोशेषु चन्द्रिकाकृता हे सखे इति सम्बुध्य न परामृश्य व्याख्यातमस्ति॥

अत्र च श्लोके प्राधान्येन चमत्कारावह किं व्यतिरेक उत रसादिरिति विवेक्तव्यम्। तत्र विप्रलम्भशृङ्गाररस एव प्राधान्येन प्रतीयते इति रसगङ्गाधरकारादीना मतम्। तथाहि सशोकशब्देन व्यतिरेकमानयता शोकसहभूताना निर्वेदचिन्तादीना व्यभिचारिणा विप्रलम्भपरिपोषकाणा, कान्तापादतलाहतिजन्यप्रमोदस्मरणस्य अनुभावस्य, अशोकरक्तपल्लवनिरीक्षणभ्रमरमञ्जुगुञ्जनश्रवणाद्युद्दीपनविभावस्य, च सत्त्वान्नायकोद्देश्यका नायकनिष्ठा रति स्मर्यमाणा विप्रलम्भमुद्दीपयतीति रसस्यैव प्राधान्यमभ्युपगन्तव्यम्। रत्याद्यनुकूलतया कुतश्चिदङ्गाद्भूषणापसरण यथा शोभाविशेषाधायक, एव प्रकृते उपमालङ्कारदूरीकरणमात्रमेव विप्रलम्भरसानुगुणतया रमणीयं न व्यतिरेक, (व्यतिरेकस्य) उपमानापेक्षया उपमेयाधिक्यस्यैव व्यतिरेकपदार्थत्वात्। प्रतीपव्यावृत्त्यर्थं उपमानादुपमेयस्य गुणविशेषवत्त्वेन उत्कर्षो व्यतिरेक इति लक्षणस्य परिष्करणीयत्वात्। अत्र च रक्तस्त्वमित्यादौ उपमानापेक्षया उपमेयस्य न्यूनत्ववर्णनेन अचमत्कारितया विशिष्टस्य अतिरेकस्य

उत्कर्षस्याभावान्नव्यतिरेक , 'अय कळङ्किनश्चन्द्रान्मुखचन्द्रोतिरिच्यते' इत्यादौ अतिरेकपदार्थ उत्कर्षरूप न वैलक्षण्यमात्रप्रतिपादक', अत-एव मम्मटभट्ट आधिक्यमात्र व्यतिरेक इत्युक्तम् । उद्भटाचार्येणापि 'उपमानादुपमेयस्य केनचिद्विशेषेण अतिरेक —आधिक्य' इति प्रदर्शितम् । सहृदयधुरन्धरेण ध्वनिकृतापि 'सुकविस्तु रसानुसारेण क्वचिदलङ्कारसयोग क्वचिदलङ्कारवियोगञ्च कुर्यादित्युक्त्वा रक्तस्त्वमित्या-दिपद्य सादृश्यदूरीकरणे उदाजह्रे इत्यादि प्रामाणिकालङ्कारिकवचन-बलात् उपमानापेक्षया उपमेयस्याधिक्य एव व्यतिरेक. न न्यूनत्वे इति निश्चिन्वाना रक्तस्त्वमित्यादौ नालङ्कार' किन्तु विप्रलम्भश्रृङ्गार-रस प्राधान्येन चर्व्यते इति राद्धान्तयामासु ॥

अत्रमते प्रत्यवतिष्ठमाना राजानकरुय्यकप्रभृतय पूर्वां कोटि-माटीकमाना व्यतिरिच्यते उपमानाद्व्यावर्त्यते अनेन उपमेयमिति योगबलात् केनचिद्धर्मेण—उपमानापेक्षया उपमेयस्य वैलक्षण्यं व्यति-रेक इति निरणैषु । तथा च किञ्चिद्धर्मप्रयुक्तसाम्यवत्तया प्रतीयमनयो किञ्चिद्धर्मप्रयुक्तवैलक्षण्य व्यतिरेकशरीर. वैलक्षण्यञ्च क्वचिदुपमेयस्योत्कर्षे क्वचित्तदपकर्षे पर्यवस्यति । एतदेवाभिप्रेत्य राजानकरुय्यकोऽलङ्कारसर्वस्वे रक्तस्त्वमित्यादिपद्यमुदाहार्षीत् । तदनुसारेणैव दीक्षिता पूर्वोक्त पद्य-मलक्षयन् । यच्चोक्त उद्भटाचार्यानन्दवर्धनाचार्यप्रभृतीना वचन प्रमाण-मिति तत्रापि विचार. प्रस्तूयते—ध्वन्यालोके तावदिद पद्य मुदाहृत्य अत्रहि प्रबन्धप्रवृत्तोपि श्लेष. व्यतिरेकविवक्षया त्यज्यमान' रस-विशेष पुष्णातीत्यभिहित । एवञ्च विप्रलम्भश्रृङ्गारस्य प्रधानस्य अय व्यतिरेकः सशोकत्वकथनेन तत्सहभाविना निर्वेदचिन्तादीनां व्यभिचा-रिणा समुद्योतनेन अनुग्राहक एवेति मुख्यालङ्कारत्वमुपयता व्यतिरेकेण कथङ्कारं पदं न निधीयता । तद्व्याख्याकृता अभिनवगुप्तपादाचार्येण

' नतूपमागर्भोत्र व्यतिरेक , उपमा तु श्लेषमुखेनैवात्रायातेति श्लेषोऽत्र व्यतिरेकस्य अनुग्राहक' इति सङ्करस्यैव विषयः इत्यादिना स्पष्ट व्यतिरेक प्रदद्दशे । यच्चोक्त रतिकाले कुतश्चिदङ्गाद्भूषणापसरणन्यायेन सादृश्यदूरीकरणमात्रमत्र विवक्षितमिति तदप्यस्माकमभीष्ट । श्लेषोपमाया लोचनकृता निराकरणात्, प्रबन्धप्रवृत्त श्लेषोऽत्र त्यज्यत इति ध्वनिकृतापि व्यवस्थापनात् । उद्भटाचार्यग्रन्थेपि उपमानादुपमेयस्य. उपमेयादुपमानस्य वा केनचिद्विशेषेण अतिरेक, आधिक्यमित्यत्र उपमेयादुपमानस्याधिक्य उपमेयस्य न्यूनत्व पर्यवसन्नामिति न विरोध । अतएव अलङ्कारकौस्तुभे प्रकाशकारमतमनुसरता विश्वेश्वरपण्डितेन जनस्थाने भ्रान्त ' मित्यत्र मयास रामत्व कुशलवसुता नत्वधिगतानि उपमेये कुशलवसुताप्रासवभावस्य न्यूनतारूपस्यापि व्यतिरेकस्य. ' हनूमदाद्यैर्यशसा मया पुन' द्विषा हसैर्दौत्यपथ सितीकृत ' इति नैषधीयपद्येऽपि नलेन हनूमदादिदूत्यापेक्षया स्वकृतदौत्ये हीनत्वप्रदर्शनरूपस्य व्यतिरेकस्य प्रदर्शनाच्च न शङ्कावकाश इति सर्व रमणीयम् । एवञ्च व्यतिरेकपदार्थ. उत्कर्षापकर्षसाधारण इत्यालङ्कारिकाणा मतमनुसृत्य दीक्षितै रुदाहृत युक्तमिति शम् ॥

(अनुवर्तते)

## श्रीमन्महाराज वैजननमहोत्सवश्लोकाः*

प्राक्पाणिच्युतदाननीरनिकरै· सद्यात्मजा प्रापितम् ।
यत्तेज समलङ्करोति भुवन विद्युत्प्रदीपात्मना ॥
तस्य श्रीयदुवशमौक्तिकमणे कर्नाटभूमीपते ।
सानन्द कुरुते न कस्य हृदय जन्मोत्सवस्सभृत ॥ १ ॥
त्रीण्येवाद्य दिनानि मङ्गळकराण्येतानि सेव्यानि वै
तत्राद्य रघुनन्दनस्य जनुषा पूत द्वितीय पुन ।
हन्तु· कससुरद्विषोऽवतरणान्मान्य मधुद्वेषिण
तार्तीयीकमिद दिन च सुभग जन्मोत्सवाद्भूपते ॥ २ ॥
श्रीमत्कृष्णनृपो भविष्यति यत. मासे तृतीये ततः ।
सौभाग्यातिशयादय प्रकुरुते मासान्कनिष्ठान्परान् ॥
इत्थ पूर्वतनैर्विचिन्त्य बहुधा दैवज्ञवर्यैरय ।
नाम्ना ज्येष्ठइतीरितस्सुभगता मासस्य हन्ताद्भुतम् ॥ ३ ॥
आनन्दनाय नयनस्य महासुखाय
कर्णस्य तोषणकृते रसनस्य भूय. ।
सम्प्रीणनाय हृदयस्य बभूव लोके
श्रीकृष्णभूमिरमणस्य महोत्सवोऽय ॥ ४ ॥
जयतु सुचिरमुर्वीपालक· कृष्णभूप·
सुचरितगुणवृन्दै. रञ्जयन्सर्वलोकम् ।
इयमपि सुरवाणी तत्कृपातः प्रवृद्धा
भवतु विबुधचेतोहारिणी भूतलेऽस्मिन् ॥ ५ ॥

---

* २७-७-१९२१ तमे दिवसे श्रीमन्महाराज वैजनन महोत्सव समारम्भ-परिकल्पित कवितास्पर्धाया विद्यार्थिना नारायणेन गृहीतपारितोषिकेण पठिता श्लोका । (स)

# श्रीकृष्णभूपालीयाख्यालङ्काग्रन्थविमर्शः.

विदितमेवेद समेषा विदुषा—यत्किल धर्माधिकारिमीमासक-वृंदारककुट्टिशास्त्रि–वैदिकविद्यानिधिरामशेषशास्त्रि-श्रीशंकरापरावतारभट्ट त्र्यबकशास्त्रि—तार्किकमुक्ताहारतरळतिरुपतिश्रीनिवासाचार्यनदीयपादा-रविंदेन्दिरायमाणनूतनगौतमकुणिगल् रामशास्त्रि—तदन्तेवासिपुगवक-विवरदाचार्य –धर्माधिकारिवैय्याकरणमूर्धन्यकाशीशेषशास्त्रि–वादिवृषवा-ळाचार्य-व्याकरणनरासिंहशास्त्रि - काशीतिम्मण्णाचार्य–मज्जयाचार्य–पौरा-णिकरत्नविष्णुपादाचार्य—मन्त्रशास्त्रविचक्षणरघुपतिशास्त्रिप्रभृतीना वाच-स्पतिमपि जिगीषता पण्डितप्रकाण्डानामनारतधनकनकसन्मानश्लाघितर-णादिना स्वकीर्तिशुभ्रीकृतभुवनाभोग भोजमहाराजमत्यशेत कर्नाटक-राज्यरत्नसिंहासनाधीश्वर श्रीमान् मुम्मडिकृष्णराजसार्वभौम इति। तदास्थानमहाविदुषामेकतम साहित्यविपश्चिच्चक्रवर्ती नानाविधकविता-लहरीनिर्माणधुरीण सोसलेग्रामाभिजन. श्रीगरळपुरीशशास्त्रिमहाशय श्रीमुम्मडिकृष्णराजमहाप्रभु तज्जामातर कर्नाटककविताशार्दूल लिंगराज-प्रभुं चाश्रित्य महीशूरराजधान्यामेव वसन् महादेवपुरनृसिंहशास्त्रि—सुन्दरकाण्डसुब्बाशास्त्रि-- पेरिस्वामितिरुमलाचार्य—नारायणसोमयाजि—कूडलिसुब्रायशास्त्रिप्रभृतीन् रासकीन् साहित्यशास्त्रनदीष्णानकरोत्। एता-दृशविद्याप्रदानापदानालकर्मीणोऽपि शाश्वतिकयशश्शरीरेणापि भुवना-भोग भूषयितुमाकाङ्क्षमाण· तात्कालिकलोकोत्तरगुणोत्तरनरपतिचरित-वर्णनात्मक ललितचुचुं किमपि काव्य निर्मिमित्सु स्वशरण्य मुम्माडि श्रीकृष्णराजगुणगणनिरूपणेन लोकानानन्दयितु कृष्णभूपालीयाख्य-

मिम ग्रन्थ न्यभान्त्सीत्। अत्र चालङ्कारग्रन्थे व्युत्पित्सूनां ग्रहण-धारणपटूना (बालानां) अनायासेन निखिलालङ्कारपरिज्ञान सम्भवति। चतुरधिकाशीतिप्रबन्धनिर्माणधुरीणश्रीमदप्पदीक्षितरचितकुवलयान्दानु – सारीणि शतालङ्काराणा लक्षणानि वाक्यरूपाणि स्वविरचित कृष्ण-राजकीर्तिवर्णनरूपाण्युदाहरणानि च सहृदयहृदयावर्जकान्यत्र वर्तन्ते। बालकदुर्ग्रहवाक्यार्थशून्यतया ललितललितोऽयमलङ्कारग्रन्थ कुवलया-नन्दवत् रसिकजनस्वान्तानि परवशीकरोति। परन्तु कुवलयानन्दे केवलमर्थालङ्कारा निरूपिता। अत्र तूपमादयो अर्थालङ्कारा अनुप्रा-सयमकादय. शब्दालङ्कारा' चक्रपद्मबन्धादीनि च स्वरसतया विद्यन्ते इति हेन्नः परमामोद। प्रत्नमेतादृशग्रन्थरत्न मुद्रापयितुं समयमी-हमाना गरळपुरीशशास्त्रितनूजा कवितिलकोपाध्यलङ्कृता' सोसले अय्याशास्त्रिण श्रीकर्नाटकरत्नसिंहासनाधीश्वरश्रीमन्नाल्वडिकृष्णराज–कृपाकटाक्षनिरीक्षणक्षमा तदाज्ञया राजकीयशाखामुद्रायन्त्रालये ऐषम प्रत्न ग्रन्थरत्नमेनत्समुद्रय विद्वद्वरेण्येभ्योऽभ्युपायनीचक्रुरिति प्रमोदो विदुषाम्। एतादृशग्रन्थरत्नस्य उपलब्धिस्थानम्—कवितिलक सोसले अय्याशास्त्रिण. चामराजाग्रहारकविताविलासनिवासिन. मैसूरु इति। अस्य ग्रन्थस्य इदानीं मूल्य द्वादशाणका' ॥

महाविद्वान् क. गोपालकृष्णशास्त्री.

क्रमेणोपर्यधोभावेन निहिते $\begin{matrix}१\\७\end{matrix}$ । अनयोरध क्षेपो दत्तः $\begin{matrix}१\\७\\५\end{matrix}$ । एषामध-स्शून्यं निक्षिप्तम् $\begin{matrix}१\\७\\५\\०\end{matrix}$ । अथ वल्ल्युपसहारे कृते जातौ राशी $\begin{matrix}४०\\३५\end{matrix}$ । इमौ दृढभाज्यभाजकाभ्या $\begin{matrix}१७\\१५\end{matrix}$ तष्टौ जातौ लब्धिगुणौ ६ ५-। अत्रापि त्रैराशिकमार्गः पूर्ववद्योज्यः । नन्वेवं मतिकल्पनायासमन्तरेण कुट्टक-गणिते विद्यमाने किमर्थमार्यभट्टाचार्यादिभिर्मतिकल्पनाङ्गीकृता । अत्रो-च्यते—साग्रे तावदवश्यं मतिकल्पनया भवितव्यम् अतः साग्रनिरग्र-योर्द्वयोरपि सास्त्वित्यङ्गीकृतेत्यदोष ॥

इत्यत्रिकुलाभरणस्य स्कन्धत्रयवेदिन सिद्धान्तवल्लभ इतिप्रसिद्धा-
परनाम्न श्रीवरदराजाचार्यस्य तनयेन देवराजेन
विरचिताया कुट्टाकारशिरोमणिटीकाया
महालक्ष्मीमुक्तावल्या निरग्रपरि-
च्छेदो द्वितीय ॥

---

## कुवलयानन्दपाठसंशोधनम्

VI

१. कुवलयानन्देऽप्रस्तुतप्रशंसाप्रकरणे 'धन्या खलु वने वाता काह्लारा सुखशीतळा । राममिन्दीवरश्याम ये स्पृशन्त्यनिवारिता ॥' इति पद्यमलङ्कार सर्वस्वस्थमुदाहारि । अत्र वाता धन्या इत्यप्रस्तुतादर्थादहमधन्य इति वैधर्म्येण प्रस्तुतोऽर्थ· प्रतीयत ाति तत्रत्य वाक्यमप्यनूदितम् । परन्तु अलङ्कारसर्वस्वे 'धन्याः खलु वने वाता· कह्लारस्पर्शशीतळा· ।' इति पाठ समुपलभ्यते ॥

अयमेव पाठ साहित्यदर्पणकारेणाङ्गीकृत । तद्व्याख्याने च धन्या इति दशरथस्योक्तिरियम्, कह्लारशब्दस्य कह्लारवति जले लक्षणा, सौगन्ध्यप्रतीतिरत्र लक्षणा प्रयोजनम्, तस्य जलस्य शीतळा इति विवृतम् । चन्द्रिकायान्तु काह्लारा—कह्लार जलपुष्पविशेष, तत्सम्बन्धिन काह्लारा, सुखयन्तीति सुखा ते च ते शीतळाश्च इति व्याख्यातम् । एव परस्परपाठे विरुद्धे लक्ष्यमाणे आकरग्रन्थान्वेषणावसरे इद पद्य अनन्तशयनराजकीयमुद्रणायन्त्रालये मुद्रित प्रतिमानाटके (अङ्क II श्लोक १२ पुट ३३) धन्या खलु वने वातास्तटाकपरिवर्तिन· । विचरन्त वने रामं ये स्पृशन्ति यथासुखम्' इति सर्वांशे पाठवैलक्षण्यमनुभूयते । सर्वेष्वप्येतेषु पाठभेदेषु अर्थदोषादेरलक्ष्यमाणत्वेपि कुवलयानन्दपाठस्य स्वरसत्वेपि च आकरग्रन्थपाठाश्रयणमेव साधीय । यथाश्रुतपाठपरित्यागे साधकबाधकप्रमाणयोरप्रदर्शनात् । अलङ्कारलक्षणसमन्वयश्च सर्वेष्वपि पाठभेदेष्वविशिष्ट इति न तत्राग्रह इति आकरस्थपाठाश्रयणमेव न्याय्यम् ॥

२. यत्रैता लहरी चलाञ्चलदृशो व्यापारयन्ति भ्रुवौ । यत्तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः । तच्चक्रीकृतचापपुङ्खित शरप्रेङ्खत्करः क्रोधनः धावत्यग्रत एव शासनधरः सत्यं तदासांस्मरः ॥

अयं श्लोकः प्रमाणालङ्कारेषु अनुमानालङ्कारस्य लक्ष्यत्वेन लिखितः । अयमेव श्लोकः अलङ्कारसर्वस्वेऽपि वर्तते । तत्र तु प्रथमपादे 'यत्रैतालहरी चलाञ्चलदृशो व्यापारयन्ति भ्रुवम्' इति, तृतीयपादे 'तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः' इति च पाठभेदः समालक्ष्यते ॥

काव्यप्रकाशे च प्रथमपादांशे कुवलयानन्दपाठसारूप्यस्य उपलभ्यमानत्वेपि तृतीयपादांशे अलङ्कारसर्वस्वपाठसारूप्यमादृतम् । चतुर्थपादे तु सत्य सदासां स्मरः इति वैलक्षण्य दृश्यते । सुभाषितरत्नभाण्डागारेऽलङ्कारकौस्तुभे चेदं पद्यमवालोकि । सर्वत्र चतुर्थपादे सत्य सदासां स्मरः इति पाठस्य दर्शनात् कुवलयानन्दे तादृश एव पाठ शोधयितव्य । अलङ्कारकौस्तुभे तु तृतीयपादे चक्रीकृतचापसञ्चितशरप्रेङ्खदिति पाठभेदो वर्तते । निरूपितेष्वेषु कः प्रशस्यः इति परिचिन्त्यमाने सर्वग्रन्थापेक्षया प्राचीनालङ्कारसर्वस्वपाठ एव आदरणीय इति भाति । तथा हि । लहरीचलाञ्चलदृशः प्रवाहवच्चञ्चलप्रान्तचक्षुष इत्यर्थः 'मिथ्यामीलदराळपक्ष्माणि वलत्यन्तः कुरङ्गीदृशः दीर्घापाङ्गसरित्तरङ्गतरळे तल्पोन्मुखं चक्षुषी' त्यादौ प्रवाहवत्तरङ्गवत् चाञ्चल्य कटाक्षे कविकुलक्षुण्णं । लहरीचलाचल इति पाठे लहरीवत् चलाचलाः चञ्चलाः दृशः यासामित्यर्थः । कम्पनार्थकात् चलधातोः भौवादिकात् पचादित्त्वादच्प्रत्यये 'चरि चलि पति वदीनां वाद्वित्त्वमच्याक्चाभ्यासस्य' इतिवार्तिकेन द्वित्त्वे अभ्यासस्यागागमे च चलाचलमिति रूप सिध्यति । चल

लोल चलाचल इत्यमरसिंहश्च । तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः इति तृतीयपादस्य तु चक्रीकृतः=कर्षणेन वर्तुलीकृत चाप =धनुः यस्मिन्कर्मणि । अञ्चितेषु=धनुषि योजितेषु शरेषु=बाणेषु प्रेङ्खत्कर प्रेङ्खन्=अनवरतचञ्चल कर यस्य इत्यर्थ. । चक्रीकृतचापपुङ्खित शरप्रेङ्खत्कर इत्यत्र तु चक्रीकृते मण्डलीकृते चापे पुङ्खिता योजितमुखा ये शराः तेषु प्रेङ्खन्करो यस्येत्यर्थ । अत्र चापे पुङ्खिता योजितमुखा' शरा इति चन्द्रिकाकारस्य व्याख्यानं नातीव समञ्जसम् । पुङ्खोन्यूङ्ख समुद्गश्चे' त्यमरसिंहेन पुङ्खशब्दस्य बाणमूलार्थकत्व प्रदर्शितम् । तद्व्याख्याया सुधायाञ्च पुङ्ख.=काण्डमूलमिति व्याख्यातम् । अत एव नैषधमहाकाव्ये (७ स. ८९ श्लो.) 'रज्यन्नखस्याङ्गुळिपञ्चकस्य मिषादसौ हैङ्गुलपञ्चतूणे । हैमैकपुङ्खास्तिविशुद्धपर्वा प्रियाकरे पञ्चशरी स्मरस्य ।' इतिश्लोकव्याख्यानावसरे मल्लिनाथेन हैमैकपुङ्खा =सुवर्णा', केवला' कर्तर्याख्या. बाणमूलप्रदेशाः यस्या', 'कर्तरी' पुङ्ख इति यादवकोशश्च स्वोक्तार्थे प्रमाणीकृत । तथा रघुवशमहाकाव्ये (२ स. ३१ श्लो) 'सक्ताङ्गुळि सायक पुङ्ख एव चित्रार्पितारम्भ इवावतस्थे इतिश्लोकतात्पर्यपरिशीलनेन च पुङ्खशब्दस्य बाणमूलवाचकत्व स्वरसतो ज्ञायत एव । इषुधौ अधोमुखानां बाणानामवस्थापन धानुष्कसमयसिद्धम् । बाणसन्धानार्थं बाणमूले करे व्यापृते सति उद्धरणासामर्थ्यात् चित्रार्पितारम्भ इवेत्याद्युपमानवाक्यार्थस्वारस्येन बाणमूले सक्ताङ्गुलिर्दिलीपः निर्व्यापार आसीदित्यर्थः विश्वजनीनः । पुङ्खशब्दस्य बाणमुखवाचकत्व तावत्प्रमाणविरुद्धम् । 'सपत्रनिष्पत्रादतिव्यथने' इति सूत्रवृत्तौ सपत्राकरोति निष्पत्राकरोति मृगमित्यत्र सपुङ्खस्य शरस्य अपरपार्श्वे विनिर्गमन निष्पत्राकरण, अतिव्यथने किं सपत्र निष्पत्र वा करोति

भूतलम् शराग्रभागमात्रखननेन कर्तर्याख्यबाणमूलप्रदेशे सयोजित-कङ्कपत्राणा भूमेरुपीरर्दशनीमति व्याख्यातृभि विवृतम्। कुवलयानन्द एव 'एका मूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावळि, इति प्रयोग: 'पुङ्खानुपुङ्खविषये क्षणतत्परोपि स्वात्मावलोकनधिय न जहाति योगी इति प्रयोगश्च। एवञ्च बाणमूलवाचकत्व पुङ्खशब्दस्य कोशव्याकरणादिप्रमाणत. सिद्धम्। वस्तुतस्तु काव्यप्रकाश, काव्यप्रदीप, उद्योत, सुधा सागरादिषु तच्चक्रीकृतचापमञ्चितशर इत्येवपाठ सलक्ष्यते। काव्यप्रदीपव्याख्याने प्रभाया अञ्चिते धनुषि योजिते शरे इति व्याख्यातम्। उदाहरणचन्द्रिकायां तैरेव वैद्यनाथदीक्षितै' अञ्चिते योजिते शर इति व्याख्यानात्, कुवलयानन्दचन्द्रिका, काव्यप्रदीपप्रभा, उदाहरणचन्द्रिकादिग्रन्थानामेककर्तृकत्वस्य प्रसिद्धत्वाच्च तच्चक्रीकृत-चापमञ्चितशरप्रेङ्खत्कर इत्यादि पाठ एव स्वरस.। 'धन्या खलु वने वाता' इति श्लोक इवात्रापि कैश्चिन्नव्यै अनुप्रासलोभेन तच्चक्रीकृतचापपुङ्खितशरप्रेङ्खत्करः क्रोधन' इति पाठ' विपर्यासित इति भाति; सुधासागरव्याख्यायान्तु अञ्चितशरेषु अनुसन्धीयमान-शरेष्विति व्याख्यातम्। अलङ्कारसर्वस्वव्याख्याया विमर्शिन्या, अलङ्कारकौस्तुभे च 'तच्चक्रीकृतचापसञ्चितशरप्रेङ्खत्कर इति पाठभेदः समालक्ष्यते। सर्वैरपि व्याख्यातृभि. अनुमानप्रयोगप्रदर्शनावसरे एता चक्रीकृतचाप सदा पुरोधावदञ्चितशरत्वादिविशिष्टमनोभवाः इत्येव लिखितम्। अलङ्कारकौस्तुभे च अनुमानञ्चेद केवलव्यतिरेकि-स्वरूपमेवेति विशेष. प्रदर्शितः। अत' सर्वग्रन्थसामरस्येन 'तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्कर. क्रोधन'' इत्येव पाठ. साधीयानित्युरर्यकारि। अत्र च श्लोके अनुमानालङ्कार इति सर्वै रभ्युपगत। अनुमानपदेन चात्र किं अनुमितिकरण व्याप्तिज्ञान विवक्षित, उतानुमितिर्विवक्षिता?

उभयत्रापि यथाक्रम करणे ल्युटि भावे ल्युटि च कृते अनुमान-शब्दनिष्पत्ते , किं तावन्नः प्रतिभाति अनुमानपदमत्र करणवाचक-मेवेति वक्तु युक्त । कुवलयानन्दकारै· प्रमाणालङ्कारमध्ये अनुमानस्य निरूपणात् । अनुमितिरूपस्यानुमानस्य प्रमारूपत्वेन प्रमाणत्वाभावात् । अतएव रसगङ्गाधरेऽपि अनुमितिकरणमनुमानम् । अनुमितिश्चानु-मितत्त्ववती । अनुमितित्वञ्च अनुमिनोमीति मानससाक्षात्कारसाक्षिको जातिविशेष । व्याप्तिप्रकारकपक्षधर्मतानिश्चयजन्यज्ञान वाऽनुमिति । तस्याश्च करण व्याप्तिप्रकारकलिङ्गनिश्चय इत्येके । व्याप्यत्वेन निश्चीयमान लिङ्गमित्यपरे । इदञ्च साधारणमनुमान अस्य च कवि-प्रतिभोल्लिखितत्वेन चमत्कारित्वे काव्यालङ्कारता । यत्र लिङ्गलिङ्गिनो सत्त्व तत्र मन्ये शङ्के अवैमि जाने इत्यादिपदानां अनुमितिबोधकत्व । यत्र तु सादृश्यादिनिमित्तसद्भाव तत्रोत्प्रेक्षाबोधकत्वमिति विवेक । तेन मन्मथामात्यमायान्तमह मन्ये महामहम् । चक्षुश्चमत्कृतिं धत्ते यदहो किल कोकिल । इत्यादौ अनुमैव नोत्प्रोक्षाइति । अनुमानालङ्कारे निश्चिततया प्रतीति·, उत्प्रेक्षायामनिश्चिततयेति भेद· इति दर्पणकार । सर्वस्वव्याख्यायां विमर्शिन्याञ्च अनुमान द्विधा स्वार्थं परार्थञ्च । तत्र स्वार्थं यत्र मयायमवगतोऽर्थः इति स्वपरामर्शस्य निश्चय स्यात् । परार्थन्तु यत्र परेणानवगतस्य वस्तुन· प्रतिपादनात् परप्रत्यायकत्व स्यात् । एवञ्च स्वार्थपरार्थभेदेन द्विविधमनुमानमप्येकोऽलङ्कारो वाच्य इति कथितम् । उक्तञ्च तर्कसङ्ग्रहदीपिकादौ स्वीयसंशयनि वृत्तिप्रयोजनकानुमान, स्वार्थानुमान ; परप्रयुक्तन्यायप्रयोगात् अनुमान-रूपव्याप्तिनिश्चयः परार्थानुमान । स्वार्थानुमितिपरार्थानुमित्योः लिङ्ग-परामर्श एव कारण, तस्माल्लिङ्गपरामर्शोऽनुमानमित्यादि ' । तस्मादनु-मितिकरणीभूत प्रमाणमेवात्र अनुमानशब्देन वक्तुं योग्यमिति चेत् अत्र

अनुमानशब्देन अनुमितिरेव ग्रहीतुं योग्या, कुतः अलङ्कारकौस्तुभे 'अव्यभिचरितसामानाधिकरण्यरूपव्याप्तिविशिष्टसाधनेन धर्मिणि तन्निष्ठात्यन्ताभावप्रतियोगित्वरूपव्यापकत्वविशिष्टस्य साध्यस्य यज्ज्ञानं तदनुमानमित्यर्थं अनुमितिरेवात्र अनुमानपदेनोच्यते। तस्या एव चमत्कारजनकत्वेन अलङ्कारत्वात् तां विना परामर्शमात्रेण प्रकृतानुकूलार्थसिद्धिविरहात् व्याप्तिश्चात्र पारमार्थिकी कविकल्पिता चेति भाषितम्। काव्यप्रकाशेऽपि पक्षसत्वसपक्षसत्वविपक्षासत्वरूपत्रयवता साधनेन धर्मिणि पक्षे व्यापकस्यायोगव्यवच्छेदः अनुमानमलङ्कार इत्युक्तम्। एवञ्च प्राचीननवीनग्रन्थपरिशीलनेन अनुमितिरेवात्रालङ्कारः न तु अनुमितिकरणमनुमानमलङ्कार इति निरणायि। यत्तु रसगङ्गाधरवाक्यं प्रमाणतया प्रदर्शितं तत्तु भ्रान्तं तद्ग्रन्थानवलोकनमूलभ्रमजन्यं, तत्रैव अनुमानालङ्कारप्रकरणे 'अत्रेदं बोध्यं, मन्ये इत्यादिवाचकपदोपादाने वाच्यमनुमानं। वक्ति कथयतीत्यादिलक्षकपदोपादाने लक्ष्यं। तदन्यतरानुपादाने साध्याक्षिप्तायामनुमितौ प्रतीयमानं, साध्यस्याप्यनुपादाने लिङ्गमात्रोपादानेन यत्रागूर्यमाणं साध्यं तत्र ध्वन्यमानं। यथा 'गुञ्जन्ति मञ्जु परितो गत्वा धावन्ति सम्मुखम्। आवर्तन्ते विवर्तन्ते सरसीषु मधुव्रताः'। अत्र शरदागमस्य साध्यस्य अनुमानं ध्वन्यते। एवमेषा व्यवस्था न प्रागुक्ते करणमनुमानमिति नये सङ्गच्छते। करणस्य ज्ञायमानलिङ्गत्वपक्षे वाच्यतायाः केवलाया आपत्तेः। लिङ्गज्ञानत्वपक्षे वाच्यत्वलक्षत्वयोरनापत्तेः। अतोऽनुमितिरेवानुमानम्। तस्याश्च वाच्यत्वलक्ष्यत्वप्रतीयमानत्वध्वन्यमानत्वानां साम्राज्यम्। ल्युटश्च करण इव भावेऽपीत्यन्तग्रन्थाकलनात् पूर्वोक्तकाव्यप्रकाशादिग्रन्थस्वारस्याच्चानुमितिरेवात्र अनुमानालङ्कार इति सिद्धान्तः। तर्हि दीक्षितैः प्रमाणालङ्कारमध्येऽस्य कथं गणनं कृतमिति चेद्विमर्शिनीकारादीनां केषाञ्चिन्मतरीत्या, स च

पक्ष रसगङ्गाधरे प्रथममनूदितोऽपि व्यवस्थानापत्तिरूपस्य दोषस्य सद्भावात् त्यक्त । अनुकूलार्थसिद्ध्या द्वितीयपक्ष एव सादरमाश्रित इत्यल पल्लवितेन ॥

३ वपु प्रादुर्भावादनुमितमिद जन्मनि पुरा पुरारे न क्वापि क्वचिदपि भवन्त प्रणतवान् । नमन्मुक्त. सम्प्रत्यहमतनुरग्रेप्यनतिमानि- तीश क्षन्तव्यं तदिदमपराधद्वयमपि ॥

इदञ्च पद्य काव्यलिङ्गालङ्कारप्रकरणे उदाहृतम् । काव्यप्रकाशे त्विद पद्य द्वितीयतृतीयतुर्यपादेषु ‘पुरारे न प्राय क्वचिदपि भवन्त प्रणतवान् । नमन्मुक्त सम्प्रत्यहमतनुरग्रेप्यनतिभाक् । महेश क्षन्तव्य तदिदमपराधद्वयमपि । इति किञ्चिद्व्यत्यस्तपाठवत्तया दरीदृश्यते । अनयो. पाठयोर्मध्ये प्रकाशस्थ पाठ स्वरस इति भाति । तथाहि— हे पुरारे पूर्वस्मिन्जन्मनि क्वचिदपि क्षणे प्राय बाहुल्येन भवन्त न प्रणतवान् । इदञ्च मया वपु प्रादुर्भावात्—शरीरोत्पत्तिरूपाल्लिङ्गादनु- मितम् ज्ञातम् । त्वत्प्रणामे सति मुक्तिलाभेन शरीरोत्पत्तेरेवाभावात् इति तात्पर्यम् । सम्प्रत्यह नमन्मुक्त अतः भाविनि जन्मन्यपि अनतिमान् हे महेश तदिदमपराधद्वयमपि अनमनद्वयजन्य दुरितविशेषरूप अपराध- द्वय नाशनीयमित्यर्थ । अत्र तादिद पदाभ्यामेव पूर्वापरजन्मनोरनमन- द्वयजन्यदुरितविशेषरूपापराधद्वयस्य लाभे इतिशब्देन किं परामष्टुं शक्यते, अत हे महेशेति सम्बोधन युक्तम् । महत्त्वञ्च अनन्तकोटि- जन्मस्वप्यारचितमहत्तरदुरितनिकरदूरीकरणेन निरुपाधिककृपावशात् भ- क्तनतजनसमुद्धरणशक्तिमत्त्वरूपं स्वरसम् । इतिपदेन चैतादृशोऽर्थ. न प्रतीयते । तेन च यत्कृत्य तत्तत्पदेनैव कृतप्रायम् । द्वितीयपादे क्वक्वचिदित्यनयोरेकार्थत्वात् अन्यतरपदानुपादानेऽपि विवक्षितार्थसिद्धि- र्भवति । सुधासागरे तु ‘पुरारे न प्रायः क्षणमपीति पाठ आलो-

क्यते । काव्यप्रदीपे तद्व्याख्यायां प्रभायां उदाहरणचन्द्रिकायाञ्च 'पुरारे नैवाह क्वचिदपि भवन्तामिति, महेश क्षन्तव्यमिति च पाठयोरुपलम्भात् पूर्वोक्तार्थे पुष्टो भवति । उदाहरणचन्द्रिकायाः कुवलयानन्दचन्द्रिकायाश्चैककर्तृत्वेन पाठभेदस्यादरण नातीव समञ्जसम् । व्याख्याकारै सर्वैश्च महेश क्षन्तव्यमित्यादि पाठएव स्वीकृत । अनतिमानिति कुवलयानन्दपाठापेक्षया अनतिभागिति प्रकाशस्थ. अर्थतो न भिद्यत इति तद्विवरणमनुपयुक्तम् । अत्र श्लोके तदिदपदाभ्या पूर्वापरजन्मनोरनमनेन जन्य दुरितद्वयमेव परामृश्यते न तु अनमनद्वय, तथात्वे हेतुत्वस्य शाब्दत्वेन एकान्तशैत्यात्कदलीविशेषा' इत्यादाविव अनलङ्कारतापत्ते., तादृशापराधस्य क्षमणञ्च तत्फलानुत्पादन तन्नाशन वेति नानुपपत्तिरिति काव्यप्रकाशस्थः पाठ एव प्रशस्त । अत्र श्लोकव्याख्यावसरे मूले पूर्वापरजन्मनो रनुमानाभ्यां वाक्यार्थभूताभ्या क्रियत इति मुम्बपुरीचेन्नपुरीकुम्भघोणादिषु मुद्रितकोशेषु सर्वेषु अशुद्धपाठ सलक्ष्यते । तत्स्थाने पूर्वपरजन्मनोरनमनाभ्यामिति पाठेन वर्तितव्यम् । एवमनेकप्रदेशेषु मूलस्थवाक्येष्वपि पाठपरिवर्तनमावश्यकम् । एवमेव मुद्रालङ्कारे 'तथाप्यस्योत्तरार्धस्य लक्ष्यलक्षणयुक्तछन्द.शास्त्रमध्यपातित्वेन सूचनीयत्वमस्तीत्यत्र छन्द-शास्त्रमध्यपातित्वे इति सप्तम्यन्तपाठ एव सङ्गत इति रसिकरञ्जनीकारः 'एतेन छन्द'शास्त्रमध्यपातित्वेनेति तृतीयान्तपाठमेव बहुमन्यमाना — आगृह्वानाः केचित्परास्ता इत्यभिदधौ । इत्थं निदर्शनालङ्कारोऽपि विधिविष्टरकमलदण्डविशिष्टत्वरूपसाधारणधर्मवत्तासम्पादनार्थमेवेत्यत्र विधिविष्टरकमलश्लिष्टत्वरूपसाधारणधर्मेत्यादिपाठः परिष्करणीयः । इत्थं बहुषु स्थलेषु वाक्येष्वपि परिष्करणीयाः पाठभेदा वर्तन्ते ॥

(अनुवर्तते)

## अङ्गत्वनिरुक्तिः.

(अनुवृत्ता)

———

'फल च पुरुषार्थत्वादित्यत्र फलेषु पुरुषार्थत्व व्यवहार अङ्गत्व-व्यवहारवत् भाक्तइत्याहु । तदपि यथा श्रुतं न माधीय । "अगन्मे" ति मन्त्रस्य लिङ्गकल्पित श्रुत्या स्वयमार्थित स्वर्गोद्देशेन विधानात् तत्र पुरुषार्थ त्वलक्षणस्यातिव्याप्ते । अत एव स्वय-प्रार्थितभिन्नवृत्युद्देश्यतानिरूपितविधेयताकत्वाभावात् क्रत्वर्थत्वलक्षणस्या-व्याप्तेश्च । किञ्च 'हीषिति वृष्टिकामस्य निधन कुर्यादि" त्यादौ वृष्ट्याद्युद्देशेन स्वसाधनसौभरीयनिधनाधारत्वसम्बन्धेन विधीयमानेषु हीषादिषु लक्षणस्यातिव्याप्त्यव्याप्ती । न हि तेषा पुरुषार्थत्व मिष्टम् । शाखाभेदेन सौभरीयनिधनाधारतया विहिताना हीषादीना अनियमेन वृष्ट्यर्थ सौभरीयनिधनाधारत्वप्राप्तौ 'हीषितिवृष्टिकामाय निधन कुर्यात्, ऊइत्यन्नाद्यकामाय, ऊर्गीति स्वर्गकामाय.' इत्यादि वाक्ये तत्त-त्फलार्थ सौभरीयनिधने हीषादीना नियममात्रकरणात् । अत एवोक्त-सम्बन्धेन वृष्ट्याद्युद्देशेन हीषादेरपि वस्तुतः तत्तत्फलार्थ सौभरीय-निधने आधारतया हीषादिनियम एव तत्तद्विधितात्पर्यम् । नचैवमपि वृष्टिकामादिपदेन वृष्ट्यादिसाधनसौभरलक्षणया तदीयनिधनाधारत्व सम्बन्धेन हीषादिनियमविधिरस्तु । तथाचोद्देश्य सौभरस्य स्वय-प्रार्थितत्वाभावान्नाव्याप्त्यतिव्याप्ती इति वाच्यम् । औत्तरकालिक नियमविधिलाघवानुरोधेन गुरुधर्मावच्छिन्नलक्षणाया अन्याय्यत्वात् । तदपेक्षया अपूर्वविधित्वापादकस्य सौभराधिकरण पूर्वपक्ष्यभिमतस्य फलान्तरोद्देशेन हीषादिविधेरेव युक्तत्वेन तदधिकरणसिद्धान्तानुपपत्ते ।

अतो नियमविधिपरस्य तत्रत्यसिद्धान्तोक्तप्रकार एव तात्पर्यमिति स्वेनैव तदधिकरणे प्रतिपादितम्। अत· कथ स्वोक्तिविरुद्धलक्षण कथन युज्यते। अतएव तदुक्तरीत्यैव तद्दोषाभिधानम्। वस्तुतो हीषिति वृष्टिकामाय निधन कुर्यादित्यादौ न वृष्ट्याद्युद्देशेन निरुक्तसम्बन्धेन हीषादिविधि। तथात्वे वृष्टिकामपुरुषविशेषणतया श्रुताया· वृष्टेरुद्धेश्यतया अन्वयायोगात् वृष्टिकामपदे वृष्टिलक्षणापत्तेश्चतुर्थ्या· कर्मत्वलक्षणापत्तेश्च। अतो लक्षणाद्वयापत्तेस्तदपेक्षया एकस्मिन्निधनपदे वृष्टिप्रयोजनकनिधनलक्षणया तदुद्देशेनैव हीषादि विधिर्युक्त·। निधनपदोत्तरद्वितीयाया· कर्मत्वस्य शक्त्यैवोक्तत्वाल्लक्षणान्तराप्रसक्ते·। नचास्मन्मते वृष्टिकामादिपदे कर्मधारयाङ्गीकरणान्न लक्षणान्तरप्रसक्तिरिति वाच्यम्। तथापि चतुर्थ्या स्वशक्यतावच्छेदकानवच्छिन्न कर्मत्वलक्षणापेक्षया निधनपदेनैव स्वशक्यतावच्छेदकावच्छिन्न निरुक्तनिधनलक्षणाया उचितत्वाद्विधिसान्निहितपदस्योद्देश्यसमर्पकत्वे विप्रकृष्टपदस्य तथात्वायोगाच्च। अपिच भवन्मते निधनपदानुवादो निष्प्रयोजनः। नच सम्बन्धतात्पर्यग्राहकतया तदुपयोग·। नियमविधिलाघवानुगृहीत हीषादिपदस्यैव तत्वात्। अस्मन्मते तु निधनपदीयलक्षणातात्पर्यग्राहकतया वृष्टिकामादिपद सार्थक्यमिति न कस्यापि वैयर्थ्यम्। अत एव यत्र नैवं विधेोद्देश्यसमर्पकपदश्रवणं यथा 'वासिष्ठाना नाराशसो द्वितीय प्रयाज इत्यादौ तत्र द्वितीयप्रयाजपदवैयर्थ्यमङ्गीकृत्यापि वासिष्ठोद्देशेन तदभिलषित फलसाधनीभूत दर्शपूर्णमासाङ्ग द्वितीयप्रयाजवृत्तित्वसम्बन्धेन नाराशसमन्त्रविधि। न हि तत्र प्रयाजपदे निरुक्तप्रयाजलक्षणया तदुद्देशेन मन्त्रविधिस्सम्भवति; तथात्वे प्रथमायामपि स्वशक्यतावच्छेदकानवच्छिन्नकर्मत्व लक्षणाङ्गीकारे लक्षणाद्वयापत्तेः। अतो वर तत्र वासिष्ठपदोत्तरषष्ठ्याः

स्वशक्यतावच्छेदकावच्छिन्नकर्मत्वलक्षणया निरुक्तप्रकाराङ्गीकरणम् । प्रकृते तु द्वितीयान्तविधिसन्निहित निधनपदस्यैवोद्देश्यसमर्पकत्वे सम्भवति न तद्विपरीत वृष्टिकामादिपदस्य तदुचितम् । एतेन सौभराधिकरण-पूर्वपक्ष्यभिमत प्रकारोपि निरस्त । नियमविधिलाघवानुगृहीतनिरुक्त-युक्तिनिचय पराहतत्वात् । अत एवास्मन्मते उद्देश्यतावच्छेदक-सम्बन्धगौरवस्यपराहतत्वाच्च । अतो वस्तुतो ह्रीषादावतिव्याप्त्यव्याप्त्यो-रभावेपि तदुक्तपक्षमवलम्ब्य तदभिधानम् । अगन्मइत्यादौ तु तयो र्बहुव्रीहित्वमेव । अथ स्वयप्रार्थितजनकत्वे सति स्वयप्रार्थितवृत्त्यु-द्देश्यतानिरूपितविधेयताशालित्व पुरुषार्थत्व । विधेयतायामेव वा जनकता-सम्बन्धावच्छिन्नत्व निवेश्यम् । अगन्मेतिमन्त्रस्य स्मारकतया स्वर्गो-द्देशेन विहितत्वेपि तदजनकत्वात् । ह्रीषादेश्च परम्परया वृष्ट्या-द्यर्थत्वान्नोक्तानुपपत्ति· । अतस्सत्यन्तमात्रविवक्षायां ‘सूक्तवाकेन प्रस्तरं प्रहरती’ त्यत्र प्रतिपत्त्यर्थतया विहितस्यापि प्रहरणस्य तृतीयावगत-करणत्वान्यथानुपपत्त्यानुषङ्गिकायुरादिजनकत्वादतिव्याप्तिरतो विशेष्य-दळम् । ततश्चायुरादिप्रकाशकसूक्तवाक भागस्य प्रहरणाङ्गत्वनिर्वाहाय आयुरादेस्तज्जन्यत्वमात्रकल्पनया तदुद्देशेन प्रहरणस्य विधेयत्वाभावा-न्नातिव्याप्ति । इतरथा प्रस्तरस्याप्युद्देश्यत्वे वाक्यभेदप्रसङ्गात्, वाक्यान्तरकल्पनया आयुराद्युद्देशेन प्रहरणविधानन्तु सूक्तवाककरण-त्वानुपपत्ते· आयुरादिजनकत्वमात्रकल्पनयैवोपक्षीयमाणत्वादनुपपन्नम् । एव च उक्तविधपुरुषार्थभिन्नांगत्वमेव क्रत्वर्थत्व मिति न क्रत्वर्थत्वलक्षणे पूर्वोक्ताव्याप्त्यतिव्याप्ती इति चेन्न । दोषाभावोद्देशेन विधीयमानविवा-हार्थानृतवदनादौ पुरूषार्थलक्षणाव्याप्तेः । दोषाभावस्याजनकत्वाज्जन-कत्वस्याननुगतत्वेन तद्घटितलक्षणायोगात् क्रत्वर्थलक्षणे उभयार्थदध्या-दावव्याप्तेश्च । अत एव वाच्यम् । अपूर्वीयत्वानवच्छिन्न स्वयप्रार्थित

वृत्त्युद्देश्य तानिरूपित विधेयताशालित्व पुरुषार्थत्व । अस्तिचेद स्वर्गा-वुद्देशेन विधीयमानज्योतिष्टोमादौ । अनिर्दिष्टप्रकार स्वर्गादिस्वरूपे आनर्थक्याभावेन तन्निष्ठोद्देश्यताया· स्वर्गत्वादिनैवावच्छेदात् । अत्र पूर्वोक्तरीत्या अगन्मेत्यादावातिव्याप्तिवारणाय अपूर्वीयत्वानवच्छिन्नेत्यु-द्देश्यविशेणम् । तत्र स्वर्गादिनिष्ठोद्देश्यताया अपूर्वीयत्वावच्छिन्नत्वस्य नवमे प्रतिपादितत्वान्नदोष । आहवनीयादिस्वरूपे आनर्थक्याभावेन आहवनीयत्वादेरेव उद्देश्यतावच्छेदकत्वेन अपूर्वीयत्वानवच्छिन्नोद्देश्य-तानिरूपितविधेयतावत्वस्य आधानादावपि सत्वात् स्वयप्रार्थितवृत्तीत्यु-द्देश्यताविशेषणम् । अत एव हीषादिस्थलीयास्मदुक्तप्रकारे निधनादि-निष्ठोद्देश्यताया वृष्टिप्रोजकनिधनत्वावाच्छिन्नाया अपूर्वीयत्वानवच्छिन्न-त्वेपि स्वयंप्रार्थितवृत्तित्वाभावान्न तत्र अतिव्याप्ति । एव निरुक्तपुरुषार्थ-त्वघटकोद्देश्यताविलक्षणोद्देश्यतानिरूपिताविधेयता शालित्व क्रत्वर्थत्वम् निरुक्तोद्देश्यताविलक्षणत्व च निरुक्तोद्देश्यतावृत्यपूर्वीयत्वानवच्छिन्नत्व स्व-यर्प्रार्थितवृत्तित्वोभयाभाववत्वम् । भवति हि प्रयाजनिष्ठविधेयतानिरू-पितदर्शपूर्णमासादिनिष्ठोक्तोद्देश्यता निरुक्तोभयाभाववती । दर्शपूर्णमासे आनर्थक्येनैव तयोरुद्देश्यत्वात् स्वयप्रार्थितवृत्तित्वाभावाच्च अत· प्रयाजादे: क्रत्वर्थत्वम् । अत्रापूर्वीयत्वानवच्छिन्नत्वाभावमात्रोक्तौ यूप छिनत्ति हि-रण्यशकलसहस्रेण अग्निं प्रोक्षतीत्यादौ यूपादिस्वरूपे आनर्थक्याभावेन अपूर्वीयत्वलक्षणाभावाद्यूपत्वादिनैव यूपादेरुद्देश्यत्वाच्छेदनादावव्याप्ति । एव स्वयप्रार्थितवृत्तित्वाभावमात्रोक्तावगन्मेत्यादावव्याप्ति । अत उभ-याभावपर्यन्तानुधावनम् । तथाच यूपादिवृत्युद्देश्यताया· स्वयंप्रार्थित-वृत्तित्वाभावप्रयुक्तोभायाभाववत्वात्स्वर्गादिनिष्ठोद्देश्यतायाश्चा पूर्वीयत्वानव-च्छिन्नत्वाभावप्रयुक्तोभयाभाववत्वान्नाव्याप्ति· । ाधानादेस्तु क्रत्वर्थत्व-मिष्टमेव । ननु तप्ते पयसि दध्यानयति, इत्यत्र पय उद्दिश्य

दध्यानयन विधीयत इति अष्टमे सिद्धान्तितम्। तत्र च पयसो नापूर्वीयत्वेनोद्देश्यता, एतद्वाक्यप्रवृत्ते पूर्वं पयस अपूर्वसाधनत्वानवगमेन पय -पदेन लक्षणायोगात् न व्रीहीनवहन्तीत्यादिवाक्यनिरपेक्षप्रवृत्तिकेन 'व्रीहिभिर्यजेत' इत्यादि वाक्येन व्रीहीणामिवप्रकृतवाक्यनिरपेक्षेण केनचिद्वाक्येन पयसोऽपूर्वसाधनत्वमवगतम् । येन लक्ष्यतावच्छेदकस्य पूर्वमुपस्थितत्वात् तदवच्छिन्नेऽवघातादि वाक्यस्थ व्रीहिपदस्येव पय पदस्य लक्षणा भवेत्। सा वैश्वदेव्यामिक्षेत्यादिवाक्यन्तु प्रकृतवाक्यनिर्दिष्ट पय परामर्शक तच्छद्बघटितत्वात् उत्तरप्रवृत्तिकमेवेति अपूर्वीयत्वेन पयस उद्देश्यत्वायोगात् पयस्त्वेनैवोद्देश्यता वाच्या । तथाच अपूर्वीयत्वानवच्छिन्नस्वयप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताकत्वात् आनयने पुरुषार्थलक्षणातिव्याप्ति । एव पयोगतोद्देश्यताया निरुक्तोभयाभाववत्वात् क्रत्वर्थलक्षणाऽव्याप्तिरिति चेत् । न पयस आनयनासाध्यत्वेनान्वयानुपपत्ते. । पय पदस्य पयस्त्वसमानाधिकरणधर्मावच्छिन्ने लक्षणाङ्गीकारात् । स च धर्म आमिक्षावाक्यप्रवृत्युत्तरकाल अपूर्वसाधनत्वरूप एवेत्यवगमात् पयोवृत्त्युद्देश्यतायास्तदवच्छिन्नत्वान्नोक्ताव्याप्त्यतिव्याप्ती । अत एव व्रीहीनवहन्तीत्यादौ व्रीहित्वावच्छिन्नो द्देशेनैवावघातादेर्विधानान्नापूर्वार्थत्वकल्पनमित्यपूर्वीयत्वलक्षणाखण्डनप्रकारो विधिरसायनोक्तोपि निरस्त । अयोग्यतानिश्चयस्य प्रतिबन्धकत्वेन प्रथमत शाद्बबोधस्यैवानुदयात् लक्षणाया आवश्यकत्वात् । नचैवमपि वैतुष्यादिविशिष्टएव व्रीह्यादिपदलक्षणास्त्विति वाच्यम् । लक्षणाया आवश्यकत्वे आनर्थक्यपरिहारायापूर्वीयत्वविशिष्टलक्षणाया एवौचित्यात् । नन्वेवमपि व्रीहीनवहन्तीत्यादौ अपूर्वसाधनत्वलक्षणायामपि तप्ते पयसीत्यत्र न लक्षणा । तथा पयः पदस्य सप्तम्याश्च लक्षणामपेक्ष्य तप्तपयोधिकरणकत्वविशिष्टदध्यानयनस्याराादुपकारकत्वेनैव विधानस्योचितत्वात् अदृष्टकल्पनाकृतगौरवस्य फल-

मुखत्वेनादोषत्वात् । अवघातादिवाक्ये तु आरादुपकारकत्वपक्षे प्रधान-भूतद्वितीयाया करणत्वे लक्षणाप्रसगात् । गुणभूतप्रातिपदिक एव उक्तलक्षणाङ्गीकारेण सन्निपत्योपकारकत्वमिति विशेष इति चेत् । न तच्छब्दस्य पूर्वोपस्थितप्रधानपरामर्शकत्वेन पूर्ववाक्ये प्रधानीभूत-परामृष्टव्याभावे तदनुपपत्ते । जुषन्तां पय इति मन्त्रवर्णादिनिर्णी-तपयश्शक्तिकामिक्षापदसमभिव्याहृततच्छब्देन च दाधिपरामर्शायोगात् तस्य प्राधान्यानुपपत्ते पूर्वोक्तलक्षणाद्वयमङ्गीकृत्य पयसउद्देश्यत्वावश्यक-त्वात् अपूर्वसाधनत्वेनैव पयस उद्देश्यत्वात् नोक्तलक्षणद्वयेप्युक्तदोष । अय च प्राचीनमीमासकोक्तवाक्यार्थमभिप्रेत्य दोषपरिहार । वस्तुतस्तु निषादस्थपत्यधिकरणविरोधात् नाय वाक्यार्थस्समञ्जस, तच्छब्दस्य मन्त्रवर्णानुरोधेन गुणीभूत पय परामर्शकत्वानुपपत्ते. । पयस उद्देश्य-त्वेऽपि शाब्दबोधे गुणत्वेनैवान्वयात् । भवन्मतेऽपि तच्छब्दस्य प्रधानपरामर्शकत्वाभावाच्च । न हि वस्तुतो यत्प्रधान तत्परामर्शकत्व तच्छब्दस्य, राजपुरुषस्ससुन्दर इत्यादौ वस्तुत प्रधानेऽपि राज्ञि सुन्दरत्वानन्वयात् । अत एव वैमृधन्यायेन पदान्तरकल्पनया तप्तपयोधिकरणत्वविशिष्टदध्यानयनस्य पयोङ्गत्वेन विधिरिति कैश्चि-दुक्तमपि प्रत्युक्तम् । पदान्तरकल्पनागौरवेण निषादस्थपत्याधिकर-णविरोधनादवस्थ्यात् । वैमृधस्थले तु द्वितीयान्ताविद्यमानपदस्यैवानु-सन्धानमात्रकल्पनान्न निषाधस्थपत्यधिकरणविरोध । अतो मन्त्रवर्णा-नुरोधेन तच्छब्दस्य गुणीभूतपय परामर्शकत्वमभ्युपेत्य पयोधिकर-णत्वविशिष्टदध्यानयनभावनैव इष्टसामान्योद्देशेन विधीयते । इष्ट-विशेषाकाङ्क्षायां च सामर्थ्याद्वाक्यान्तरकल्पनया प्रधानाङ्गभूतामि-क्षोद्देशेन निरुक्तानयनविधि. । न च वाक्यान्तरकल्पनायां साम-र्थ्यादामिक्षाया इव वाजिनस्याप्युद्देश्यतापत्ते आनयनप्रयोजकत्वा-

पत्ति । श्रुतवाक्ये पयस आनयनव्याप्यदधिव्याप्यतयाऽवगतस्य कल्पितवाक्ये उद्देश्यैचित्येन तस्येव प्रयोजकत्वात् । तत्र चापूर्व-साधनत्वस्य पूर्वमवगतत्वात् तत्वेनैव आमिक्षाया उद्देश्यता । फलमुखत्वाच्च वाक्यान्तरकल्पना न दोष । अतोनोक्तलक्षणद्वयेऽपि अव्याप्त्यतिव्याप्तिवार्तापीति । नन्वाहवनीयत्वयूपत्वादेरपि आधान-च्छेदनादिजन्यविजातीयापूर्वविशिष्टत्वरूपत्वात् तदवच्छिन्नोद्देश्यताया अपि अपूर्वीयत्वावच्छिन्नत्वात् पुरुषार्थलक्षणे आधानादिवारकस्वयप्रार्थित-वृत्तित्वस्य क्रत्वर्थलक्षणेऽपूर्वीयत्वानवच्छिन्नत्वाभावमात्रस्य निषेधद्वय-गर्भताया गौरवेणापूर्वीयत्वावच्छिन्नत्वमात्रस्यैव वा उद्देश्यताविशेषण-त्वेनोपपत्तौ उभयाभावस्य च वैयर्थ्यमिति चेन्न । आहवनीयादिनिष्ठा-धानाद्युद्देश्यताया आधारतासबन्धेन विजातीयापूर्वरूपाहवनीयत्वावच्छि-न्नत्वेनापूर्वसबन्धित्वरूपापूर्वीयत्वानवच्छिन्नत्वादुक्ताव्याप्त्यतिव्याप्तिवा-रणाय लक्षणद्वयेऽप्युक्तविशेषणसार्थक्यात् । न चैव स्वर्गनिष्ठमन्त्रोद्दे-श्यताया अपि लाघवात्साध्यतासबन्धेनापूर्वावच्छेद्यत्वापत्तेरपूर्वीयत्वानव-च्छेद्यत्वेन आद्यलक्षणे अगन्मेतिमन्त्रे अतिव्याप्ति । क्रत्वर्थत्वलक्षणे अव्याप्तिश्चदुर्वारेति वाच्यम् । साध्यत्वादेस्सम्बन्धत्वे मानाभावेन अपू-र्वस्य तेन सबन्धेन तत्र अवच्छेदकत्वानुपपत्ते । अपूर्वसाध्यत्वेनैव स्वर्गस्योद्देश्यत्वात् अतएव साधनतासंबन्धेनापूर्वविशिष्ठलक्षणाम-पहाय व्रीह्यादिपदेऽपूर्वसाधनत्वविशिष्टएव लक्षणा अङ्गीकृता तेषा-मर्थाधिकरणादौ । आधारतायास्सबन्धत्वेऽविवादात् । तत्सबन्धेनापूर्वस्यैव आहवनीययूपादिनिष्ठोद्देश्यतावच्छेदकत्वात् नोक्तविशेषणवैयर्थ्यम् । न चैवमप्यपूर्वीयत्वस्य साध्यत्वसाधनत्वादिरूपत्वेनाननुगतत्वात् तद्घ-टितलक्षणायोग । अपूर्वसाध्यत्वसाधनत्वयोरपूर्वघटितधर्मत्वेनानुगमात् । अपूर्वघटितत्व च नापूर्वाविषयकप्रतीत्यविषयत्व मपूर्वस्यापि तत्त्वेन उक्त-

लक्षणद्वये उक्तरीत्या विशेषणद्वयवैयर्थ्यापत्तेः। नापि स्वाविषयकप्रतीतिविषयापूर्वविषयकप्रतीत्यविषयत्वम्। स्वाविषयकप्रतीतिविषयत्वविशेषणेन अपूर्वं वारयित्वा लक्षणद्वयेऽतिव्याप्त्यव्याप्ती सपाद्य तद्वारकस्वयप्रार्थितवृत्तित्वोभयाभावविशेषणदानस्य प्रक्षाळनाद्धि पङ्कस्येतिन्यायपराहतत्वात् गौरवाच्च। किन्तु निरूपितत्वसबन्धेनापूर्वविशिष्टत्व। तच्चापूर्वव्यावृत्तमेव। अतो नोक्तविशेषणद्वयवैयर्थ्यम्। नचापूर्वाविषयकप्रतीत्यविषयत्वरूपापूर्वसाधारणापूर्वघटितत्वघटितलक्षणेनैव सामजस्ये किमित्यपूर्वव्यावृत्तापूर्वघटितत्वघटनया उक्तविशेषणद्वयोपादानमिति वाच्यम्। तस्य लक्षणान्तरत्वात्। अपूर्वीयव्रीह्युद्देशेनावघातविधौ अपूर्वोद्देशेनापि तद्विधेरावश्यकत्वेन अपूर्वाविषयप्रतीत्यविषयधर्मानवच्छिन्नापूर्वनिष्ठोद्देश्यतानिरूपितविधेयतावत्वात्। अवघाताद्यङ्गेषु अतिव्याप्तिवारणाय तल्लक्षणेपि स्वयप्रार्थितवृत्तित्वविशेषणावश्यकत्वाच्च। वस्तुतस्तु अपूर्वसाधनत्वावच्छिन्नाया अपूर्वत्वावच्छिन्नाया अपूर्वनिष्ठायाश्च क्त्वार्थाङ्गीयोद्देश्यताया स्वयप्रार्थितवृत्तित्वविशेषणेनैव वारणात्, अगन्मेतिमन्त्रोद्देश्यताया स्वर्गनिष्ठाया वारणाय अपूर्वसाध्यत्वानवाच्छिन्नत्वमेव उद्देश्यताविशेषण देयम्। अतो नापूर्वघटितत्वनिर्वचनाय यतितव्यम्। अस्मिश्च पक्षेऽपूर्वसाध्यत्वानवाच्छिन्नत्वस्वयम्प्रार्थितवृत्तित्वोभयाभावघटितक्त्वर्थत्वलक्षणेऽपूर्वसाध्यत्वानवच्छिन्नत्वाभावमात्रोक्तौ अ—गन्मेत्यादिफलाङ्गक्रत्वर्थातिरिक्तक्रत्वर्थेषु अव्याप्ति। अत. स्वयप्रार्थितवृत्तित्वघटितोभयाभावानुधावनम्। परमार्थनस्तु पुरुषार्थत्वलक्षणेऽपूर्वानवच्छिन्नत्वमेवोद्देश्यातविशेषणम्। विशिष्टपर्याप्तावच्छेदकताया पर्याप्तिसंबन्धेन विशिष्टइव स्वरूपसबन्धेन विशिष्टघटकीभूतविशेषणेष्वपि वृत्ते. अपूर्वनिष्ठावच्छेदकत्वानिरूपकत्वरूपापूर्वानवच्छिन्नत्वस्य स्वर्गनिष्ठमन्त्रोद्देश्यतायामपूर्वसाध्यत्वरूपविशिष्टधर्मावच्छिन्नायां अभावेन तद्वा-

# अभिप्रायमयूखः.

## १ अमरखण्डनम्

Journal of Oriental Research नाम्न्या पत्रिकायाः पञ्चमसम्पुटस्य प्रथमभागे श्रीचिन्तामणिभि प्रकाशितः समस्त्य-मरखण्डननामक. कश्चन क्षुद्रप्रबन्ध । प्रबन्धोऽय सङ्कभट्टाचार्यशिष्येण श्रीहर्षेण विरचितः । एष तु न रत्नावल्यादिकार नापि नैषधा-दिकार । नवीनग्रन्थोदाहरणदानात् । ग्रन्थेऽस्मिन् एकत्र "अत एवास्मत्तातचरणै शब्दचिन्तामणौ 'पुसि पीडादिनाङ्क पीत' इति कथितम्" इति समुदाहृत्य, अन्यत्र "अत एव पार्थ-सारथिमिश्रोऽपि शब्दचिन्तामणौ आह" इत्युदाहृतत्वात् एष श्रीहर्ष पार्थसारथिसूनुरिति फलितप्रायमिति प्रकाशका विलिखन्ति । न तत्सम्यगिति भाति । उदाहरणाकरयोः शब्दचिन्तामणिरिति समान नाम । तथापि 'अस्मत्तातचरणै' रिति गौरवेण तातचरणान् स्मृत्वा अनुपदेमेव पार्थसारथिमिश्रोऽपीति एकवचनेन तन्निर्देश असभावित. किल ॥

अमरखण्डनोद्देशं तन्नामैव कथयति—समाहृत्यान्यतन्त्राणीत्यादिना आदौ अमरसिंहेन कृतं यन्निबन्धन तस्य भूयान् भङ्ग इति प्रकटयन्, तन्निबन्धनेनैव तत्कण्ठबन्धनं कुर्महे इति प्रतिज्ञाय "एवममर-निबन्धनस्याशास्त्रीयत्वमिति सिद्धान्तितमित्युपसहरति श्रीहर्ष । कोशा-न्तरापेक्षया नामलिङ्गानुशासने बहुलयावन्नानता लिङ्गविनिश्चयश्च

नास्तीति खण्डनवाक्यार्थसारः । खण्डनप्रकारस्य साधुत्वासाधुत्वे विचारितव्ये सूक्ष्मशेमुषीभि ॥

एतत्खण्डनप्रकाशनेनेयानुपकार । यदनेकग्रन्थनामानि तत्कर्तृनामानि चात्रोपलभ्यन्ते। बहवो ग्रन्थास्तु अद्यावध्यलब्धा एव। अत्रोदाहृतग्रन्थतत्कर्तृनामसु मुख्यान्येतानि—

१. बालभागवतम् महेश्वरदीक्षितविरचितम् ।

२ बाष्कलभाष्यम् ।

३ चन्द्रिकेति कोश को (?) लाक्षिभट्टाचार्यविरचित. ।

४. कोशरत्नम् केनापि रचितम् ।

५ मञ्जरी सुदर्शनभट्टाचार्यविरचिता ।

६. मञ्जूषा केनापि रचिता ।

७ माण. गोवर्धनविराचित कश्चन कोश' ।

८. मुचुकुन्दभाष्यविवरणम् महेन्द्राचार्यकृतम् ।

९. नानार्थचन्द्रिका—केनापि रचित कोशग्रन्थ' ।

१०. नानार्थशिक्षामणि —केनापि रचितः कोशग्रन्थ ।

११. पर्यायरत्नमाला—महेश्वरमिश्रविराचित' कोश —एतन्मातृका उपलभ्यन्ते ।

१२. पर्यायार्णव. —नीलकण्ठमिश्रविरचित कोश'—एतन्मातृका उपलभ्यन्ते ।

१३. शाबरभाष्यव्याख्या—गदाधररचिता ।

१४. शब्दचन्द्रिका—गोविन्दपादरचिता ।

१५. शब्दचिन्तामणि'—पार्थसारथिमिश्रकृत ।

१६ शब्दमीमासा नानार्थसङ्ग्रहकृता अजयेन रचिता ।

१७. शब्दरत्न—वज्रखड्गभट्टाचार्यरचित कोशग्रन्थ ।

१८ शब्दरूपमीमासा—वर्धमानकृता ।

१९ शब्दशब्दार्थचिन्तामणि केनापि कृत ।

२० शब्दशब्दार्थमञ्जरी केनापि रचिता ।

२१. शब्दशब्दार्थमञ्जूषा — हम्मीरमिश्रराजरचिता । एतद्ग्रन्थस्य मातृका उपलभ्यन्ते ।

२२ शब्दानुशासनम्—पर्वतवर्धनकृतम् ।

२३. शारदातिलकभाष्यविवरणम् — अमरखण्डनकारश्रीहर्षस्य गुरुणा सङ्घभट्टाचार्येण विरचितम् ।

## २ तर्कपरिभाषाव्याख्याना रचनाकालविनिर्णयः.

श्री केशवमिश्रीयतर्कपरिभाषाया अनेकानि व्याख्यानानि विद्यन्ते। यथा—तर्कभाषाटीका, तर्कभाषाप्रकाश , तर्कभाषाविवरण, तर्कभाषाटीका (अपरा), तर्कभाषाप्रकाश· (अन्य·), तर्कप्रकाश इति । समेषामेषां मातृका· पुण्यपत्तनविराजमानभण्डारकरनामाङ्कितपुस्तकभाण्डागारे उपलभ्यन्ते। मातृकासु लिखित· लेखनकाल·। एतेन तत्पूर्वमेव ग्रन्थरचनाकाल इति श्रीमद्भि पि के. गोडेनामकै शोधकै. Annals of the Bhandarkar Oriental Research Institute इत्यस्या पत्रिकाया द्वादशसम्पुटतृतीयभागे ये निर्णीता· काला ते ए बि कीत् नामकपण्डितै पूर्वं निर्णीतेभ्य· कालेभ्यो भिद्यन्ते। एष भेद अध प्रदर्शिते पत्रके स्पष्टीभवति—

| संख्या | व्याख्यानाम | कर्तृनाम | ए बि कीत् नामकै पण्डितै पूर्वं निणाता काला | पि. के गोडे नामकै इदानीं निर्णीता काला |
|---|---|---|---|---|
| १ | तर्कभाषाटीका | चिन्नभट्ट | क्रि-श १३००–१३५० | |
| २ | तर्कभाषाप्रकाश | गोवर्धन | ,, १५७८ | क्रि. श. १५५० |
| ३ | तर्कभाषाविवरणम् | माधवभट्ट | ,, १६८१ वत्सरत पूर्वम् | क्रि श १६०५ वत्सरत पूर्वम् |
| ४ | तर्कभाषाटीका | वलभद्र | | क्रि श १५५६ वत्सरत पूर्वम् |
| ५ | तर्कभाषाप्रकाश | नारायणभट्ट | एता व्याख्या नोक्ता कीत्-पण्डितै | क्रि श १५६० वत्सरत पूर्वम् |
| ६ | तर्कप्रकाश | मुरारिभट्ट | | क्रि श १६५० वत्सरत पूर्वम् |

वलभद्र, नारायणभट्ट, मुरारिभट्ट विरचिता व्याख्या' सन्तीति वार्ता सन्तोषकारिणी। माधवभट्ट, गोवर्धन-विरचितयो व्याख्ययो. कालौ च अद्यावधि निर्णीतात् कालात् प्रागेवेति फलितम् ॥ (स)

# कांच्यां—श्रीसुदर्शनमुद्रायन्त्रालये क्रय्याणि पुस्तकानि.

## वैदिक ग्रन्थाः.

| न | नाम | रू | आ |
|---|---|---|---|
| 1 | श्रीसूक्तभाष्यम् | 0 | 4 |
| 2 | पुरुषसूक्तभाष्यम् | 1 | 0 |
| 3 | तैत्तिरीयोपनिषद्भाष्यम्. | 3 | 0 |
| 4 | सन्ध्यावन्दनभाष्यम् | 0 | 8 |

## वेदान्त ग्रन्थाः.

| न | नाम | रू | आ |
|---|---|---|---|
| 5 | शतदूषणी भा--1 | 4 | 6 |
| 6 | शतदूषणी भा—2 | 3 | 12 |
| 7 | शतदूषणी भा—3 | 3 | 12 |
| 8 | शतदूषणी भा—4 | 3 | 12 |
| 9 | भगवद्गीता प्रतिपदार्थविवरणसहिता | 2 | 2 |
| 10 | भगवद्गीता-वरवरमुनि व्याख्यासहिता. | 2 | 4 |
| 11 | गीतार्थसंग्रह -रक्षया सहित. | 0 | 6 |
| 12 | तत्वनिर्णयः (शैववैष्णववादः). | 0 | 4 |
| 13 | सिद्धान्तचिन्तामणिः | 0 | 12 |
| 14 | पाराशर्यविजयः (प्रथमाध्यायप्रथमपादः). | 4 | 0 |
| 15 | वेदान्तविजयः [गुरुविद्याविजः, ब्रह्मविद्याविजय, सद्विद्याविजयः, अद्वैतविद्याविजयः, परिकराविजयः] (यन्त्रस्थः) | | |
| 16 | यतिलिङ्गसमर्थनम् | 0 | 4 |
| 17 | प्रपन्नपारिजातः | 0 | 4 |
| 18 | न्यायभास्कर. (जगन्मिथ्यात्वखण्डनम्) | 1 | 8 |
| 19 | भेदवादःतत्कर्तृन्यायविचारश्च | 0 | 4 |
| 20 | दृश्यत्वानुमाननिरासवादःमोक्षकारणतावादश्च. | 0 | 4 |
| 21 | कार्याधिकरणवादः भा—1. | 0 | 10 |
| 22 | कार्याधिकरणवादः भा—2. | 1 | 0 |
| 23 | कार्याधिकरणतत्वम् | 0 | 14 |
| 24 | श्रीरामानुजासिद्धान्तसारः. | 1 | 0 |
| 25 | श्रुतितात्पर्यनिर्णयः (यन्त्रस्थः). | | |

## मीमांसा ग्रन्थाः.

| न | नाम | रू | आ |
|---|---|---|---|
| 26 | भाट्टरहस्यम् | 1 | 8 |
| 27 | मीमांसापादुका | 0 | 7 |
| 28 | मीमांसाकौस्तुभः भा—1. | 1 | 4 |
| 29 | मीमांसाकौस्तुभ भा—4. | 1 | 6 |
| 30 | मीमांसाकौस्तुभः भा—5. | 1 | 6 |
| 31 | सेश्वरमीमांसा | 1 | 14 |

| नं | नाम | रू | आ |
|---|---|---|---|
| | **न्याय ग्रन्थाः.** | | |
| 32 | प्रामाण्यवादः | 3 | 4 |
| 33 | अवच्छेदकतानिरुक्ति | 0 | 14 |
| 34 | बाधगादाधरी | 0 | 15 |
| 35 | मूलगदाधरीये शब्द-खण्डः | 1 | 4 |
| 36 | उपाधिवादः गदाधरस्य. | 2 | 0 |
| 37 | गादाधरी चतुर्दशलक्षणी. | 1 | 14 |
| 38 | गादाधरी पञ्चलक्षणी | 0 | 8 |
| 39 | सिद्धान्तलक्षणम् | 1 | 4 |
| 40 | पक्षता-गादाधरी | 1 | 8 |
| 41 | व्युत्पत्तिवाद. | 2 | 8 |
| 42 | సవ్యభిచారసామాన్య నిరుక్తిః | 1 | 0 |
| 43 | सामान्यनिरुक्तिः | 0 | 12 |
| 44 | पदवाक्यरत्नाकरः | 2 | 8 |
| 45 | సాధారణాసాధారణా నుపసంహారివిరోధగ్రన్థః | 1 | 0 |
| 46 | तत्वचिन्तामणौ अवयवग्रन्थः. | 1 | 0 |
| 47 | सत्प्रतिपक्षग्रन्थः | 0 | 14 |
| 48 | शतकोटिः | 0 | 6 |
| 49 | शतकोठिखण्डनम् श्रीकृष्णताताचार्य वि. | 0 | 6 |
| 50 | शतकोठिखण्डनम् श्रीमदनन्ताचार्यवर्यकृतम्. | 0 | 12 |

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 51 | शतकोटिमण्डनम् विजयराघवाचार्य विरचितम् | 1 | 0 |
| | **पाञ्चरात्र ग्रन्थाः.** | | |
| 52 | सात्वतसंहिता | 2 | 8 |
| 53 | ईश्वरसंहिता | 7 | 8 |
| 54 | पारमेश्वरसंहिता सव्याख्या. | 10 | 0 |
| | **सम्प्रदाय ग्रन्थाः.** | | |
| 55 | तत्वत्रयम् | 0 | 4 |
| 56 | मुमुक्षुप्पाडिरहस्यम् | 0 | 4 |
| 57 | श्रीवचनभूषणम् | 0 | 8 |
| 58 | श्रीवादिभीकरवैभवम् (सचित्रम्.) | 0 | 6 |
| 59 | श्रीवादिभीकरवैभवम् (चित्ररहितम्) | 0 | 4 |
| 60 | आचार्य चर्यामृतम् | 0 | 8 |
| 61 | ఆజ్ఞావైభవమ్ | 0 | 2 |
| 62 | அருளிசசெயலரஹஸயம | 0 | 4 |
| 63 | ముక్తభోగావళీ | 0 | 2 |
| 64 | సచ్చరిత్రపరిత్రాణమ్ | | 12 |
| 65 | பரஹமவிதயா | 1 | 8 |
| 66 | விசிஷடாதவைத விததாநத ஸாரம | 0 | 2 |
| 67 | ததவமவி | அசசில | |
| 68 | ஏகமேவாதவிதீயம பரஹம | ,, | |

| नं | नाम | रू | आ |
|---|---|---|---|
| 69 | வேதம | 2 | 0 |
| 70 | மோக்ஷம | 0 | 2 |

## आख्यायिकाः.

| नं | नाम | रू | आ |
|---|---|---|---|
| 71 | संसारचक्रम् भा 1 | 1 | 0 |
| 72 | संसारचक्रम् भा 2 | 0 | 12 |
| 73 | युगलांगुलीयम् | 0 | 6 |
| 74 | श्रीबदरिकाश्रमयात्रा वृत्तान्तः- | 3 | 0 |

## पुराण ग्रन्थाः.

| नं | नाम | रू | आ |
|---|---|---|---|
| 75 | काञ्चीमाहात्म्यम् | 1 | 12 |
| 76 | కాఞ్చీమాహాత్మ్యమ్ | 1 | 2 |
| 77 | మల్లాపురమాహాత్మ్యం యన్త్రస్థం | | |
| 78 | महाभारते शान्तिपर्व (यन्त्रस्थम्). | | |
| 79 | हरिवंशे शेषधर्मः (यन्त्रस्थः) | | |

## दिव्यप्रबन्ध व्याख्यान ग्रन्थाः.

| नं | नाम | रू | आ |
|---|---|---|---|
| 80 | முதலாயிரம வியாககியானம 1வது பாகம பெரியாழவாா திருமொழி வியாககியானம | 5 | 0 |
| 81 | ௸ 2 பாகம பெருமாள திருமொழி திருசசநத விருததம திருமாலை, திருபபள ளியெழுசசி, அமலனுதிபிரான, கணணிநுண சிறுததாமபு இவைகளின வியாககியானம (அசசில) | 5 | 0 |
| 82 | ௸ 3வது பா இதில திருபபாவை நாசசியாா திருமொழி, இவறறின வியாகயானஙகள இருககினறன | 5 | 0 |

## कोश ग्रन्थाः.

| न | नाम | रू | आ. |
|---|---|---|---|
| 83 | लिङ्गनिर्णयभूषणम् | 0 | 2 |

## इतर ग्रन्थाः.

| न | नाम | रू | आ. |
|---|---|---|---|
| 84 | वाल्मीकिभावदीपः | 1 | 0 |
| 85 | विष्णुसहस्रनामस्तोत्रम्. | 0 | 2 |
| 86 | लक्ष्मीसहस्रनामस्तोत्रम्. | 0 | 2 |
| 87 | सुभाषितकौस्तुभः | 0 | 4 |
| 88 | सप्तभङ्गीतरङ्गिणी (जैनग्रन्थ ). | 0 | 10 |
| 89 | सर्वदर्शनशिरोमणिः | 0 | 3 |
| 90 | भस्मधारणविचार | 0 | 2 |
| 91 | परतत्वनिर्णयः | 0 | 2 |
| 92 | पाञ्चोत्कालयाराधनविधिः. | 0 | 4 |
| 93 | Journal of P B Mutt | Free | |
| 94 | History of P B Mutt. | Free | |
| 95 | यतिवन्दनसमर्थनम् | 0 | 4 |
| 96 | दुर्वादविधूननम् | 0 | 8 |
| 97 | ఏకాదశీశ్రాద్ధనిర్ణయః | 0 | 12 |
| 98 | एकादशीश्राद्धमीमांसा | 0 | 4 |
| 99 | बडबानलः | 0 | 8 |

| नं | नाम | रू | आ |
|---|---|---|---|
| 100 | अन्तर्व्यामिबहिर्व्यामि विचारः. | 0 | 2 |
| 101 | ऐकशास्त्र्यमीमांसा | 0 | 7 |
| 102 | తత్త్వచన్ద్రికా | 0 | 2 |
| 103 | सुदर्शनमीमांसा | 0 | 10 |
| 104 | क्रियाकैरवचन्द्रिका | 2 | 8 |
| 105 | श्रीवैष्णवमतदूषणोद्धारः | 1 | 0 |
| 106 | పరమవైదిక సిద్ధాన్త తత్త్వరత్నాకరః | 2 | 0 |
| 107 | भोजनकुतूहलम् (यन्त्रस्थं) | | |
| 108 | श्रीभाष्यविमर्शनपरीक्षा. | 0 | 6 |

## हिन्दी भाषा की पुस्तकें.

| नं | नाम | रू | आ |
|---|---|---|---|
| 109 | यतिराजवैभव | 0 | 6 |
| 110 | उपनयनगायत्रीमीमांसापरीक्षा. | 0 | 6 |
| 111 | चक्रधारणप्रमाणसंग्रह. | 0 | 4 |
| 112 | श्रीरामानुजसम्प्रदाय की प्राचीनता. | 0 | 1 |
| 113 | विशिष्टाद्वैतसिद्धान्तसारसंग्रहः. | 0 | 1 |
| 114 | चक्रधारण क्यों करना चाहिये. | 0 | 1 |
| 115 | सन्ध्यावन्दनाविधि | 0 | 2 |
| 116 | व्रतोत्सवनिर्णय | 0 | 2 |
| 117 | तत्वोद्बोधन | 4 | 0 |
| 118 | मिथ्याआक्षेपोंकानिरास. | 0 | 2 |

| न | नाम | रू | आ |
|---|---|---|---|
| 119 | तिरुप्पल्लाण्डु | 0 | 4 |
| 120 | ऊर्ध्वपुण्ड्रधारणविधि | 0 | 1 |
| 121 | श्रीपराशरविशिष्टपरमधर्मशास्त्र | 0 | 12 |
| 122 | वेदान्तरहस्य | 0 | 4 |
| 123 | श्रीशाण्डिल्य विशिष्टपरमधर्मशास्त्र | 0 | 12 |
| 124 | तप्तमुद्राधारण पर निर्णयसिन्धुकारकारकाफैसला. | 0 | 3 |
| 125 | दिव्यदेशविवेचन | 0 | 1 |
| 126 | द्वन्द्वयुद्धसमीक्षा | 0 | 12 |
| 127 | वैदिकसर्वस्वकाविशेषाङ्क | 1 | 8 |
| 128 | अद्वैतविवेचन | 1 | 4 |
| 129 | सत्यार्थप्रकाश और श्रीवैष्णवसम्प्रदाय | 0 | 6 |
| 130 | श्रीभगवदाराधनविधिः | 0 | 2 |
| 131 | तुलसीमाहात्म्यदीपिका | 0 | 4 |
| 152 | पुरुषसूक्त (सटीक) | | |
| 133 | श्रीसूक्त ,, | | |
| 134 | ईशावास्योपनिषत् (सटीक). | | |

प्राप्तिस्थानम्—

श्रीसुदर्शनमुद्रायन्त्रालय,
CONJEEVARAM,
(*Madras*)

मञ्जुभाषिणी संस्कृतभाषामयी साप्ताहिकी पत्रिका,
वार्षिकमूल्यम् ३—०—०.

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना


| सख्या | विषय –प्रबन्धार | पुटसख्या |
|---|---|---|
| १ | अधिवनसंवादपरिशिष्टम् (अथवा स्त्रीस्वातन्त्र्यम् )- विद्वांस· श्री शिवसुब्रह्मण्यशास्त्रिण· | १६८ |
| २ | कुट्टाकारशिरोमणिः (अनुवृत्तः) महालक्ष्मी- मुक्तावल्याख्यया नवटीकया संवलितः— महाविद्वांसः करूरु शेषाचार्या· | १८८ |
| ३. | अङ्गत्वानिरुक्तिः—(अनुवृत्ता)— विद्वांसः श्री आरडिकुप्पं सुब्रह्मण्यशास्त्रिण· | १९३ |
| ४. | मोक्षतत्त्वम्— महामहोपाध्यायाः पण्डितरत्नं श्री लक्ष्मीपुरं श्रीनिवासाचार्याः ... | १९७ |

## सम्पादकीयसमितिः

१ श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि ए, विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२ श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्याय-डाक्टर् आर् शामशास्त्रिणः बि. ए, पिएच् डि, एं.आर्. ए.एस्, विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन विमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि श्रीनिवासाचार्याः, एं ए, मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४ धर्माधिकारिणः ब्र. श्री काशी शेषवेङ्कटाचलशास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र श्री लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायाः

६ महामहोपाध्यायाः विद्यानिधयः धर्माधिकारिणः ब्र. श्री. विरूपाक्षशास्त्रिणः, महापाठशालायामद्वैतवेदान्तप्रधानोपाध्यायाः

७. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशालासाहित्यप्रधानोपाध्यायाः

८. महाविद्वांसः करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

९. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए. महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयाम प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले)
२. विद्यार्थिनां पुनः एकरूप्यकम् प्रापणव्ययपृथक्कृतम्.
३ विभिन्नदेशे सपादरूप्यद्वयम् (3s) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः, एम्.ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्ष , मैसूरु

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

१. रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना
२. जर्नल् आफ् ओरियंटल् रिसर्च्, मदरासु.
३. प्रबुद्धकर्णाटक, बेंगळूरु.
४. मिथिक् सोसैटि जर्नल्, बेङ्गळूरु
५. यूनिवर्सिटि यूनियन् म्यगसीन्, मैसूरु.
६ सद्बोधचन्द्रिके, आनन्दवन
७ कादम्बरीसंग्रह, चामराजनगर.
८. उद्यानपत्रिका, तिरुवादि
९. सुप्रभातम्, काशी.
१० संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
११ आन्ध्रसाहित्य परिषदः पत्रिका, काकिनाड.
१२. विश्वकर्णाटक, बेङ्गळूरु.
१३. ताय्नाडु, बेङ्गळूरु.
१४ मञ्जुभाषिणी, काञ्चीपुरम्.
१५. सूर्योदयः, काशी.
१६. उद्योतः, लाहोर्.
१७. स्वधर्मप्रकाशिनी, मदरासु.
१८. जयकर्नाटक, धारवाड
१९. दि आर्यन्पात्, मुम्बै
२० वैखानसपत्रिका, चेङ्गल्पद्.
२१. दि फिलसाफिकल् क्वार्टर्लि, कल्कत्ता.
२२. रेव्यू आफ् फिलासफी एण्ड् रिलिजन्, पूना.
२३. कर्नाटिक हिस्टारिकल् रिसर्च्, धारवाड.
२४. भारती, मदरास्.
२५ अध्यात्मप्रकाशः, बेङ्गळूरु.

॥ श्री ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रयं प्रकटीक्रियमाणा.

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः "

(ईशोपनिषत्)

सम्पुटम् ७] अक्टोबर् १९३१ [सञ्चिका ४

सौभाग्यं जगता यस्य वामे वपुषि वर्तते ।
तद्धाम शाश्वतं भूयाद्भूयसे श्रेयसे मम ॥ १ ॥

काव्यं हि कविवराणां
कनकमिव श्लाघ्यवर्णसङ्कलितम् ।
दुर्जनजिह्वाज्वलने
तप्तं प्रविभाति निर्मलाकारम् ॥ २ ॥

आप इव जगति विमला
वाचो रसनीयतां दधति ।
काव्यप्रपञ्चसृष्टे-
र्यो मूलं कविविधातृलोकस्य ॥ ३ ॥

(वामनभट्टबाणस्य)

## अधिवनसंवादपरिशिष्टम्.

(अथवा स्त्रीस्वातन्त्र्यम्)

अथ निवर्तितमहाकालेश्वरयात्रौ वैतण्डिकसुन्दरकावधीयाते स्माङ्गानि वेदान् स्मृतीश्च साकं सब्रह्मचारिभिः उत्तममध्यमाधम-शेमुषीभिः, यन्मध्ये प्रावर्तत प्रतिपित्सैनयो । किन्वीष्टे स्त्री स्वातन्त्र्य लब्धुमुताहो नेति यदन्वभावि संवादझर्यैताभ्याम् ॥

वैताण्डिकः—

श्रीसदृशी स्त्री, तस्मात् श्रीवत्पूज्येतिमनुनोक्ता—

"प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तय ।
स्त्रिय· श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन" । इति ॥
प्रीत्याधानं कर्म च पूजाशब्दार्थमिह विद्म ।
नर्ते स्वतन्त्रताया एषा प्रीणाति तेनास्यै ।
स्वातन्त्र्यदानमिष्टं मनुनेत्येतत्तु सुस्पष्टम् ।
अपि चेश्वरेण सृष्टे मर्त्यनिकाये कुतोऽस्तु तरतमता ?
तस्मादीष्टे सर्वा स्वतन्त्रतायां न जातु हीनैषा ।
पुरुषाद् रमणी यस्माद् अस्वातन्त्र्याय कल्पेत ।

अपितु—पुंसो विशेषमासां चौर्यप्रस्तावववचनात् स्यात् ॥ तथाहि—

"पुरुषाणां कुलीनानां नारीणां च विशेषत ।
मुख्यानां चैव रत्नानां हरणे वधमर्हति" । इति ८.१२३ मनुः

किंच—बहुश· पुरुष रमणी मत्या ह्यत्येति विद्मोदः ।

एव सति तु वृथाऽऽभ्योऽसूयन्तोऽज्ञा वदन्ति हनित्वम् ।
अस्वातन्त्र्यं चासां तत्तत्र ह्याहुरतिदुष्टम् ।

सुन्दरक· —नन्विह मनुनैवासामस्वातन्त्र्यं स्वभाणि कण्ठोक्त्या ।

" अस्वतन्त्रा स्त्रिय कार्या पुरुषै स्वैर्दिवानिशम् ।
विषयेषु च सज्जन्त्य. संस्थाप्या आत्मनो वशे " । इति
" पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति " । इति च ।

वैतण्डिक —तर्कि नर स्वतन्त्र स्यादेकान्तेन तव रीत्या ।
एवन्त्वे त्व बहुना स्पष्ट दोषेण युज्येथा ।
राज्ञा शास्य सर्व चातुर्वर्ण्यं हि मनुराह ।
यथाहि—" सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नर ।
दण्डस्य हि भयात् सर्व जगद्भोगाय कल्पते " । इति ।
एव ह्यन्वयभङ्गीमस्वातन्त्र्याय सङ्कल्प्य ।
व्यतिरेकभङ्गिकामपि तद्वाख्यायाह सर्वस्य ।
" यदि न प्रणयेद्राजा दण्ड दण्ड्येष्वतन्द्रितः ।
शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तरा. " । इति ।
" दुष्येयुस्सर्ववर्णाश्च भिद्येरन् सर्वसेतव
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ।" इति च ।
बह्वर्थवचनभङ्ग्या ह्युपसहार्यन्त एषोर्थ ।
" स राजा पुरुषो दण्ड स नेता शासिता च स ।
चतुर्णामाश्रमाणा च धर्मस्य प्रतिभू स्मृत " । इति ।
दण्ड शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्ड. सुप्तेषु जागर्ति दण्ड धर्मं विदुर्बुधा । इति च ।

अयमर्थ—सत्यादिधर्मरचनां स्ववशा पुरुषा. कथ कुर्यु ?
अयोन्यघातलोप कुतस्त्य एतेषु सम्भाव्यः ?
स्तेनस्वतन्त्रताया निद्रा कस्येह जायेत ?
एव रीतौ कथमिव मर्यादैतेषु कापि स्यात् ?

निर्मर्यादो लोक कथन्तरामत्र कृत्य स्वम् ।
कर्तुं प्रभवेद् ? अकृते कथन्तमामस्य सुखलेश. ?
दण्डै परवन्तोऽतः सर्वे प्रभवन्ति निर्बाधम् ।
कृत्याय येन फलिनः तादिद प्रोक्त प्रशास्ति दण्डः इति ।
बहुना किमत्र देवा अस्वातन्त्र्येण पीड्यन्ते ।
श्रूयते हि—" भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम." इति ।
स्मर्यते च—" देवदानवगन्धर्वा रक्षासि पतगोरगा. ।
तेपि भोगाय कल्पन्ते दण्डेनैव निपीडिता " इति ।
तस्माद्दुरुद्धरानिह दोषान्मित्र प्रदूष्य साध्नोतु ।
पुरुषस्वतन्त्रपक्ष प्रतिज्ञयैवात्र क वार्थम् ।
को वा राद्धु प्रभवेद् दूषयितु वान्यासिद्धान्तम् ।
सुन्दरक —मानवकण्ठोक्तीना का वा गतिरार्य तां ब्रूहि ।
वैतण्डिक —ननु रे सम्राट्काय पञ्चषाभिषज सदैव रक्षन्ति ।
तद्वत् कालविशेषे तेते रक्षन्ति रमणीं स्वाम् ।
एतावता तु नैषा स्वस्वातन्त्र्यात् च्यवेत राजेव ।
तावकसशयनुत्यै एतद्दृष्टान्तदृष्टयैव ।
रक्षति पितेति वचन रक्षतिघटित व्यलेखि मनुनैव ।
नो चेदस्वातन्त्र्य निरोधरूप विभाव्य सर्वस्मात् ।
त्वादृग्विधो हि रमणीं नितरा बाधेत मौढ्येन ।
तन्मारोत्सीरेनां तत्त्व वच्म्यङ्ग मित्रत्वात् ।
सुन्दरक.— सर्वोऽस्वतन्त्र इति ते वचनं रिक्तं यतोस्ति राजाऽसौ ।
स्वातन्त्र्येणैवान्यान् शासितुमीष्टे त्वयैव सम्प्रोक्तम् ।
यदि न प्रणयेद्राजेत्येतत् स्मृत्यादि सङ्गृह्य ।

वैतण्डिकः—नाहमवादिषमेव विपर्ययोऽग्राहि भवतैव ।
उच्चावचान् हि शासितृवर्गान् विद्मो जनस्य रक्षायै ।
ग्रामाध्यक्षो नगराध्यक्षो राष्ट्रस्य सगोप्ता ।
सर्वाध्यक्ष इतीमे शासितृभेदा स्मृतिभ्य इष्यन्ते ।
तत्तच्छासनमात्रान्नेशत एते स्वतन्त्रकृत्याय ।
"राष्ट्रस्य सङ्ग्रहे नित्य विधानमिदमाचरेत् ।
सुसङ्गृहीतराष्ट्रो हि पार्थिव सुखमेधते ।
द्वयोस्त्रयाणा पञ्चाना मध्ये गुल्ममधिष्ठितम् ।
तथा ग्रामशतीना च कुर्याद् राष्ट्रस्य सङ्ग्रहम् ।
ग्रामस्याधिपतिं कुर्याद्दशग्रामपतिं तथा ।
विशतीश शतेश च सहस्रपतिमेव च । इति ।

किंच—

ग्रामदोषान् समुत्पन्नान् ग्रामिक शनकै स्वयम् ।
शसेद् ग्रामदशेशाय दशेशो विशतीशिने ।
विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत् ।
शसेद् ग्रामशतेशस्तु सहस्रपतये स्वयम् ।" इति ।
एव परतन्त्रत्व तेषामप्याह मन्वादि ।
एवं शासद्राजा नेष्टे स्वातन्त्र्यमाश्रयितुम् ।
तस्याप्यनेकनियमा. पालनकृत्ये भवन्ति शास्त्रकृता' ।
प्रथमत एवगुणको राजा प्रोक्तो हि याज्ञवल्क्येन ।
"महोत्साह' स्थूललक्ष कृतज्ञो वृद्धसेवक. ।
विनीत' सत्त्वसम्पन्न. कुलीन सत्यवाक् शुचि ।
अदीर्घसूत्र. स्मृतिमानक्षुद्रोऽपरुषस्तथा ।
धार्मिकोऽव्यसनश्चैव प्राज्ञ' शूरो रहस्यवित् ।

स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्या दण्डनीत्या तथैव च ।
विनीतस्त्वथ वार्ताया त्रय्या चैव नराधिप ।" इति ।
बहुविधपरिश्रमेण प्राप्या एते गुणाश्च किञ्चान्यत् ।
दिवस रात्रिं चाष्टौ भागान् कृत्वा तदीयकृत्येभ्य ।
युङ्क्ते शास्त्र स यथा प्रथमे कार्या व्ययाय निर्णीतिः ।
शय्योत्थानात् त्वरया कृतशौचेनाऽस्य तद्वर्गै ।
अष्टादशसु पदेषु प्रसक्तवादा द्वितीयभागेन ।
वादिजनेभ्य सम्यग् ज्ञेया अन्योन्यरुद्धेभ्य ।
स्नान पूजा भुक्तिश्चैतत् कार्या तृतीयेन ।
विविधान् करान् सुयुक्त्याऽऽदद्यात् तुर्येण भागेन ।
मन्त्र पञ्चमभागे कार्यं सन्मन्त्रिमुख्येन ।
हा हन्त षष्ठ एव स्वैरविहाराय शास्त्रोक्त ।
तिस्रस्त्रिपादयुक्ता नाड्यो गणनेन कालोऽयम् ।
उच्चावच बल वै सप्तमभागे परीक्षेत ।
सेनापतिना सार्धं विक्रमचिन्ताथ चरमेण ।
सुन्दरक पश्य दिवसे स्वतन्त्रतामस्य सपूर्णाम् ।
अवधत्स्व रात्रिविषये प्रथमे चारै. स्वराष्ट्रस्य ।
बुद्ध्या विधाय रक्षा सम्यक् कुर्वीत यतचित्त ।
भोजनवेदाध्ययने द्वितीयभागे तृतीये तु ।
तौर्यत्रिकादिनायं श्रान्त स्वान्त सुनन्द्य विश्राम्येत् ।
शान्तं पापं तुर्यः पञ्चम इत्येव शयनार्हौ ।
भागौ कथमिव बहुना क्लिष्टस्येहास्तु सुखलिप्सा ।
लिप्साभावे भोग्यै कथन्तरामेष रमता स्वै ?
रत्या हीनो नृपतिः कथन्तमां स्यात् नृपानन्दी ?

आनन्दरहितपुरुष स्वतन्त्रभावेन फलवान् किम्?
अफल बह्वायासी मत्तात्किन्वेष रिच्येत?
एवं विचार्यमाणे बहुकष्ट त्वेव राज्य भो ।
चुलुकीकृतोऽयमर्थो महता कविना सुचिन्त्य सर्वमिदम् ।
"सर्वः प्रार्थितमर्थमधिगम्य सुखी सम्पद्यते जन्तु ।

राज्ञा तु चरितार्थता दु खान्तरैव—

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेनम् ।
नातिश्रमापनयनाय न च श्रमाय
राज्य स्वहस्तधृतदण्डमिवातपत्रम् ॥" इति ।
षष्ठे पुनरपि चिन्त्य शास्त्रं कार्यं च तद्योग्यै. ।
मन्त्र कार्य. सप्तमभागे दूताश्च संप्रेष्याः ।
अष्टमभागे स्वप्ने सूचितदोषादिशान्त्यर्थम् ।
शान्तिकपौष्टिककर्माण्यारभ्याणीति निर्णीति. ।
अन्वहमेव कुर्वन्नाधिकृतवर्येषु बलवत् स ।
आयतमान. परवश एवेत्येतत्तु सुस्पष्टम् ।

किंच—प्रायो ह्यधिकृतपुरुषा आत्मम्भरयो भवन्ति तेनैते ।
स्वकपरराष्ट्रजावित्त बह्वया विधया प्रसह्य लिप्सेरन् ।
तस्मान्नितान्तजाग्रद् राजा स्वप्नेऽपि वर्तेत ।
एतत्सर्वं गमयत् स्मृत्या वचन दिशाहमाचक्षे ।
"तत्रात्मभूतै. कालज्ञै. अहार्यै· परिचारकै· ।
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रै विषापहै ।
विषघ्नैरगदैश्चास्य सर्वद्रव्याणि योजयेत् ।
विषघ्नानि च रत्नानि नियतो धारयेत्सदा ।

परीक्षिता. स्त्रियश्चैन व्यंजनोदकधूपनैः ।
वेषाभरणसयुक्ता' स्पृशेयु. सुसमाहिता' ।
एव प्रयत्न कुर्वीत यानशय्यासनाशने ।
स्नाने प्रसाधने चैव सर्वालङ्कारकेषु च" इत्यादि ।
तथा—"व्यवहारान् दिदृक्षुस्तु ब्राह्मणै' सह पार्थिव. ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीत प्रविशेत्सभाम्" ।
इत्यादि च मनुराह प्राहैतद्याज्ञवल्क्योऽपि ।
"व्यवहारान् नृप. पश्येत् विद्वद्भिर्ब्राह्मणैस्सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जित ।
श्रुताध्ययनसम्पन्ना धर्मज्ञा सत्यवादिनः ।
राज्ञा सभासद कार्या रिपौ मित्रे च ये समा" ।
इति तानधिकृतपुरुषान् दण्डयानाख्याति दोषे स. ।
"रागाल्लोभात् भयाद्वापि स्मृत्यपेतादिकारिण ।
सभ्या पृथक् पृथक् दण्ड्या विवादात् द्विगुण दमम्" । इति।
सुन्दर—नन्वङ्ग राजवत् स्त्रीत्येतत् स्वातन्त्र्यवचनं त्वम् ।
आत्थ हि, विप्रतिषिद्धां तदनु प्रख्यासि परवशनाम् ।
राज्ञ , कथ त्वमत्र ब्राह्मवचा स्या ? विशिष्य निन्दसि माम् ।
विपरीतस्ते ग्रह इति, हा चित्र त्व बुधोऽसि परदोषे ।
वैतण्डिक —रक्षकभिषजो राज्ञः स्वातन्त्र्य नो मृजान्ति तद्वदिति ।
सादृश्यमिष्टमेष प्राप्नोत्वन्येन मानेन ।
नियम बहुविधमथ किं नियमितवेषः च्यवेत निजतन्त्रात् ?
तदिद स्पष्टविविक्त स्वस्वातन्त्र्यादितीह वचनेन ।
अस्याज्ञानात् भ्रान्ति भवतो वाच्म्यङ्ग नो निन्दाम् ।
सुन्दरक —स्यादेतदत्र किंचित् पृष्टो व्याचक्ष्व नारीणाम् ।

कत्या रिक्थसमृद्धिर्यत्रायत्ता स्वतन्त्राजिज्ञासा ।
यत इह निर्धनताऽऽसा वचनैरज्ञायि विमृशद्भि ।
भार्या पुत्रश्च दासश्च त्रय एवाधना स्मृता ।
यत्ते समभिगच्छन्ति यस्यैते तस्य तद्धनम् । इत्यादि ।

वैतण्डिकः—आ. भो अतिसन्धातु केन कृता ते प्रशस्तशिक्षाङ्ग ।
मयका पृष्टभवान्मे व्याचष्टा यत् स्वतन्त्रतैषाऽऽसाम्।
हीना प्रसक्तिलेशै निषेधबुद्धि कथ त आरूढा ।

सुन्दरक —पाणिग्रहणाद्धि सहत्व कर्मसु तथा पुण्यफलेषु धर्मे ।
चार्थे च कामे च नातिचरितव्या त्वयेयम् ।
इतिविधिवचनाद् भ्रान्तिप्राप्त स्वातन्त्र्यमस्त्यामाम् ।
तन्नाप्रसक्तदोषो भवतोद्भाव्यस्ततो न दोषो मे ।

वैतण्डिक.—तर्कि नितान्तमेता रिक्थैर्हीनास्तथा च किम्फलिका ।
एता स्मृतयो याभी रिक्थ स्पष्ट चकास्ति नारीणाम् ।

तथा हि—अध्यग्न्यध्यावाहनिक दत्त च प्रीतित स्त्रियै ।
भ्रातृमातृपितृप्राप्त षड्विध स्त्रीधन स्मृतम् । इति मनु ।
अध्यग्न्यध्यावाहनिक भर्तृदायस्तथैव च ।
भ्रातृदत्त पितृभ्या च षड्विध स्त्रीधन स्मृतम् । इति नारदः ।
पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिक चैव स्त्रीधन परिकीर्तितम् । इति याज्ञवल्क्य ।
पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिक बन्धुदत्त शुल्कान्वाधेयकम् । इति स्त्रीधनमिति
विवहनकाले ह्यग्ने सविधे दत्त स्त्रियै तदध्यग्नि । [विष्णु ।
पत्युर्गृहमथ यान्ती पितृकुलवित्त लभेत यत्तत्तु ।
अध्यावाहनिकाख्य परतो वहनात् प्रियेण यल्लब्धम् ।

पितृपतिकुलजनसविधादन्वाधेय तदाख्यातम् ।
अन्योद्वहनायादिपत्न्यै परितोषदत्त यत् ।
भर्त्राधिवेदनिकमिदमाख्यात स्त्रीधनानि सर्वाणि ।
स्वयमुपयोक्तु प्रभवेत् सैवेत्यत्रापि वचनानि ॥
"द्विसहस्रपरो दायः स्त्रियै देयो धनस्य तु ।
यच्च भर्त्रा धन दत्त सा यथाकाममश्नुयाद् ॥" इति व्यास ।
"वृत्तिराभरण शुल्क लाभश्च स्त्रीधन भवेत् ।
भोक्री तत् स्वयमेवेद पतिर्नार्हत्यनापदि ।" इति देवल ।
"यद्दत्त दुहितु पत्ये स्त्रियमेव तदन्वियात् ।
मृते जीवति वा पत्यौ तदपत्यमृते स्त्रिया ।
विवाहकाले यत्किञ्चिद् वरायोद्दिश्य दीयते ।
कन्यायास्तद्धनं सर्वमविभाज्य च बन्धुभि ।" इति स्मृत्यन्तरे ।
अत्रोद्दिश्येत्यधिक पदयोग ख्याति दुहितुरिदम् ।

इति पूर्वपक्षसङ्ग्रह

सुन्दरक —स्मृतिशतमङ्ग विजानाम्यन्योन्यं यद्विरुन्धदिव ।
श्रीगुरुकृपया सर्वं ह्यविरोधेनैव संशोध्य ।
वच्म्यत्र निर्णयं ते श्रद्धत्स्वैत स्वतन्त्रनिर्णीत्यै ।
प्रथम त्वेतज्ज्ञेयं यथेष्टचारः स्वतन्त्रभावो नो ।
इति यद्बहवोऽनर्था एवं चरितुर्भवन्ति दृष्टमिदम् ।
तस्मान्नियता स्त्री वा पुरुषो वेष्टे सुखेन वस्तुमिह ।
नर्ते शास्त्रान्नियमनहेतु विद्मो विशिष्य विमृशन्त ।
वेदा स्मृतयः शास्त्र तन्निन्न वान्यदेवं स्यात् ।
अनुसृत्य योग्यतामिह नारी पुसो नियच्छन्ति ।
शास्त्राणीति तदेतद् भवतोऽपीष्टं यतोऽसि तद्ग्राही ।

तदिह स्मृतिराहैना चञ्चलचित्ता' स्वतश्च निस्स्नेहा: ।
पौंश्चल्यदोषिणीरपि तत्तज्जन्यै सुदुष्टचारित्रै ।
यै' पितृभर्तृकुलद्वयमुत्सीदेद्येन हीयते ।
अर्थादनर्थमृच्छेत् सर्वो लोकस्तथा हि मनुवचनम् ॥
पौंश्चल्याच्चलचित्ताच्च नैस्स्नेह्याच्च स्वभावत' ।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते । इति ।
आह च विकृतिजदोष परिहार चार्थमेतज्जम् ।
नैता रूप परीक्षन्ते नासा वयसि सस्थिति ।
सुरूप वा विरूप वा पुमानित्येव भुञ्जते । इति ।
एवम्स्वभाव ज्ञात्वासां प्रजापतिनिसर्गजम् ।
परम यत्नमातिष्ठेत् पुरुषो रक्षण प्रति । इति ।
स्वा प्रसूतिं चरित्र च कुलमात्मानमेव च ।
स्व च धर्म प्रयत्नेन जायां रक्षद्धि रक्षति । इति च ।
एव विमृश्य सिद्ध कर्तव्यार्थ प्रशास्ति मनुरेव ।
सूक्ष्मेभ्योऽपि प्रसङ्गेभ्य. स्त्रियो रक्ष्या विशेषत. ।
द्वयोर्हि कुलयो शोकमावहेयुररक्षिता । इति ।
तस्माद्—इम हि सर्ववर्णाना पश्यन्तो धर्ममुत्तमम् ।
यतन्ते रक्षितु भार्या भर्तारो दुर्बला अपि ।
यतति लोऽर्थमिम शासनबोधाय मन्यन्ते ।
व्याख्यातारो धर्मान् बोधयितु ह्येष मनुयत्न. ।
के ते सूक्ष्मा सङ्गा ? नानाह दिशा स्वभावससिद्धान् ।
यत्प्रणालिकयैतत् कुलद्वय याति दुरवस्थाम् ।
शय्यासनमलङ्कार काम क्रोधमनार्जवम् ।
द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयद् । इति ।

किञ्चान्यद्—आपणदेवगृहादौ क्रयणाद्यटनं, वियुज्य बहुदिवसान् ।
पितृकुलवासो दुष्टासङ्गम आस्थितिरजस्रमन्यस्य ।
गेहे स्वपनं, पानं, चैते सङ्क्षुभ्य नारीणाम् ।
स्वान्तं श्वशुरादिभ्यो भीतिं लज्जां च परिहाप्य ।
स्वेच्छाचारे हेतूभवन्ति तस्मात् सुदूरहेयास्ते ।
पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहवासश्च नारीसन्दूषणानि षड् । इति ।
महता कविना चैते दोषा उक्ता निदर्श्य यं कं चित् ।
सतीमपि ज्ञातिकुलैकसंश्रया जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः ।
इति ।

किं चान्यत्—प्रागुक्तान् दोषान् मार्ष्टुं पुवनादिनि प्रशस्तजपमुख्यः ।
परिहृतिहेतुस्तदिदं निरिन्द्रियाख्या सुवदति वेदगता ।
संस्कृतजप्यो मन्त्रः संस्कारो नो भवेत्स मन्त्रेण ।
तस्माद्वेदोपचारे नैता योग्यास्तदेतदाह मनुः ।
नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मे व्यवस्थितिः ।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः । इति ।
बहुना कथितेनालं गुणदोषौ स्त्री स्वतो न गच्छेत्तु ।
भर्तेमां यदि सम्यग्रक्षेद्गुणिनी न चेत्तु दोषवती ।
तस्मात् पुरुषाधीनौ गुणदोषौ तद् यतेत रक्षायै ।
तमिमं ह्युपसंहारं निदर्शयुक्तं सुवक्ति मनुरत्र ।
यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा । इति ।
मधुररसाया नद्या लवणगुणो दोष एवेति ।

दोषे निदर्शकरणाद्दोषस्याप्यत्र लक्ष्यत्वम् ।
तथा गुणे—अक्षमाला वसिष्ठेन सयुक्ताऽधमयोनिजा ।
सारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ।
एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतय ।
उत्कर्ष योषित प्राप्ता स्वै स्वैर्भर्तृगुणै शुभै । इति ।
इयतो विशेषसङ्घान् मनसि निधायाह मनुरादौ ।
अस्वतन्त्रा. स्त्रिय कार्या पुरुषै स्वैर्दिवानिशम् ।
विषयेषु च सज्जन्त्य' सस्थाप्या आत्मनो वशे ।
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति । इति ।
अत्र च—स्वातन्त्र्यमासु देय नैवेत्येव न विदधाति ।
आर्हन्त्यभाववादाच्छोक' स्वस्यापि विवृतोऽत्र ।
यदि किल योग्यैषा स्यात् पुवत् स्वातन्त्र्यलाभ स्यात् ।
हा हन्त किं नु कुर्यां नार्हत्येषा ततो नु शोचामि । इति ।
अथ वा दयते तस्यां, दुर्भरभाराय यतमाने ।
बाले मा कुरु हठिका वत्स न भार्यस्तवायमिति यद्वत् ।
शक्तिविवेकाद्ब्रूयात् तद्वूते दयालुमनुरत्र ।
भिषजां रक्षणमियता दृष्टान्तो नेति सुव्यक्तम् ।
बहुविधवाक्यविमर्शाद्दोषानेकत्वसवित्ते ।
अथ वा युक्तनिदर्शो भवताऽभाणीति वच्म्यङ्ग ।
रक्षा यद्विषये स्यादस्वातन्त्र्य च तद्विषये ।
इति किल नियम सिद्धो राज्ञ. कायस्त्वयोक्तदृष्टान्त' ।
कायादन्यत्रासौ स्वतन्त्र एवेति सिद्धमिदम् ।
सम्यग्रक्षाहानौ भिषजां दण्डेऽपि राजेष्टे ।

किमुत स्वतन्त्रतायां तीरितशिष्टेषु वक्तव्यम् ।
यत्पुनरवदो राजा सुखहीनोऽनेककृच्छ्रत्वात् ।
इति तद्युवबालीयं वृत्त नात्येति कश्चिद्धि ।
बालो युवानमाह प्रकृष्टकर्माणि कुर्वाणम् ।
न त्व सुखलवभागी यस्मादीदृक्षमकृथा भो ।
ईदृशमेक कर्म प्रसाध्य मास नितान्तरुग्णोऽहम् ।
इति यद्यशक्तता स्याद् बाले तरुणे तथेति कुत एतत् ।
तदिह प्रशास्तृकृत्य तव मम साध्य न चैव तत्त्वोपि ।
राज्ञ सुकर यस्माद्देवांशोऽसौ तथा हि मनुवचनम् ।
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वती ।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभु ।
यस्मादेषा सुरेन्द्राणां मात्राभ्यो निर्मितो नृप ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा । इति ।
सर्वातिशायि वीर्यं ह्येतेनोक्तं ततश्च युक्तमिद ।
तपत्यादित्यवच्चैष चक्षूषि च मनासि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ।
सोऽग्निर्भवति वायुश्च सोऽर्क. सोम. स धर्मराट् ।
स कुबेरः स वरुणो स महेन्द्र. प्रभावत. । इति ।
ततश्च—बालोऽपि नावमन्तव्य. मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति । इति च सिध्यति ।
किं च—तस्मान्नियमितकालिककृत्यान्यश्रान्त एवासौ ।
कृत्वा बहुसुखभोगे सुतरामीष्टे तथा हि वेदोक्तिः ।
सत्पथवृत्तो नृपतिर्मानुषमानन्दमाप्नोति ।

इत्याचष्टे तस्मान् न त्वदुष्टोक्तिगन्धोऽपि । तथा हि—
स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः । सर्वैर्मानुष्यकैर्भोगैस्सम्पन्नतमः स मनुष्याणां परम आनन्द इति । तथा युवा स्यात् साधुयुवाध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् स एको मानुष आनन्द इति च ।

यदि वाऽशक्तिस्तर्ह्यपि शक्तेष्वधिकारिवर्गेषु ।
कृत्यं निधाय राज्ञा सुखिना स्थीयेत तच्चोक्तम् ।
एतद्विधानमातिष्ठेद् अरोगः पृथिवीपतिः ।
अस्वस्थः सर्वमेतत्तु भृत्येषु विनियोजयेद् । इति मनुः ।
अपश्यता कार्यवशाद् व्यवहारान् नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् । इति यज्ञवल्क्यः
यदि वाऽनुषङ्गलाभो ह्यतुलानन्दस्य नृपवर्ये ।
परसुखहितैकसक्ते, तदिदं प्रख्याति कविवर्यः ।
स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णम् ।
शमयति परितापं छायया संश्रितानाम् ॥ इति ।
नियमयासि कुमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ इति च ।

यत्पुना राज्ञा तु चरितार्थता दुःखान्तरैवेत्यादिनवचनं महाकवेः तदधिकारश्रमकालिकत्वात् न तत्वार्थकथनपरं तदर्थमेव आदौ 'अधिकारखेदं निरूप्ये' त्यभाणिकविना ।

एवञ्च—नृत्वे समेऽपि राज्ञां स्त्रीणा चैव विशेषमवगच्छ ।
तस्माद्राजेवेष्टे नारीत्येतत् तवैव बहुशोभि ।
अथ वा नियमितविषये राजेवेष्टे तथाहि नियमोऽस्ति ।
रक्षारीतौ कथितो यतश्च पूजा त्वयाभिलषिता स्यात् ।
नियम विहाय न खलु प्रीत्याधानेन दुष्टेन ।
कृत्येनासां प्रीतिं कर्तुं यत्येत बहुदोषात् ।
दोषप्रवण स्त्रीणां स्वान्त प्रोक्त विविच्य वाक्यशतम् ।
तस्मान्निरोध आसा महते दोषाय कल्पेत ।
अपितु—न कश्चिद् योषित शक्त प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यस्ताः परिरक्षितुम् ।
अर्थस्य सङ्ग्रहे चैना व्यये चैव नियोजयेत् ।
शौचे धर्मेऽन्नपक्त्या च पारिणाह्यस्य वेक्षणे । इति ।
ये किल नारीधर्मा शुश्रूषाद्या विशिष्य शास्त्रोक्ताः ।
तेषु च गृहकृत्येषु च रमतामेषा यथेष्टमितिबोधात् ।
दोषप्रसक्तिलेशो नैवात्रास्तीति सन्दिष्टम् ।
एव याः किल साध्व्य ता एवोद्दिश्य गीतैषा ।
इहपरलोकजभोगे साधनमत्या न जातु नारीत्वात् ।
प्रजनार्थं महाभागा. पूजार्हा गृहदीसय ।
स्त्रिय. श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन । इति ।
तथाफलम्— उत्पादनमपत्यस्य जातस्य परिपालन ।
प्रत्यहं लोकयात्राया. प्रत्यक्ष स्त्री निबन्धनम् ।
अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह । इति ।
अयमर्थः—सुतजनिरत्याद्यर्थे प्राणिसमाने नचात्र तात्पर्यम् ।

अपि तु—मातापित्रो शुद्धौ धर्मानुष्ठानसस्कारात् ।
शुद्धापत्यजनि स्यात् तत् तौ धर्मेण रक्षेताम् ।
तत्तत्कालिकबोधनजन्येनाथैष पुत्रोपि ।
त त धर्म रक्षेत् तेनाऽऽप्येतोक्तसर्वार्थ ।
तदिद ह्यभिसन्धाय प्राह कवि सूक्तिरत्न नः ।
"शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने ।
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीप गम ।
भूयिष्ठ भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी ।
यान्त्येव गृहिणीपद युवतयो वामा कुलस्याधय ।
अभिजनवतो भर्तु श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभि कृत्यैस्तस्य प्रतिक्षणमनाकुला ।
तनयमचिरात् प्राचीवार्क प्रसूय च पावन
मम विरहजां न त्व वत्से शुच गणयिष्यति ॥" इति ।
कथमिव लालितपुत्र्या एतान्निर्बन्धसङ्घान् स ।
कश्यपमहर्षिराह श्लाघ्याशीर्वादसवित्त्या ।
यदि किल भवता प्रोक्त सर्वस्वातन्त्र्यमिष्ट स्यात् ।
स्त्रीणां विशिष्य रज्या कथमिव तन्नेह ऋषिराह ?
तस्मात् साध्वीवृत्तं फलञ्च सम्यक् विमृश्य ऋषिवाक्यात् ।
कविरिह विवक्षतीति प्रकृष्टमतयो विदन्ति तत्त्वार्थम् ।
अनुपदमस्या आशिष्टः उत्कर्ष चाह सर्वाभ्य ।
यदसौ पत्नीवचन काश्यपवाचा कविरिह सञ्चष्टे ।

तथाहि—वामा कुलस्याधय इत्यनन्तर, काश्यप आह कथं वा गौतमी मन्यते' इति । अथ गौतमी—'एत्तिओ बहूजणस्स दउवदेसो जादे, एद क्खु सव्वं ओधारेहि' इति (एतावान् वधूजनस्योपदेश ।

जाते, एतत्खलु सर्वमवधारय) इति च्छाया । अत्र च—

अवधार्यमेतदिति यत् पत्नी सशास्ति पुत्रीं स्वां ।
पुनरपि तेन स्पष्ट सर्वोत्कृष्टत्वमेतस्या· ।
अतिशयितबुद्धिमत्ता चञ्चलाचित्तेन निर्धूता ।
हरणे दण्डविशेष· सङ्करदोषात् न जातु नारीत्वात् ।
तस्मादेतद्वितयं स्त्रीस्वातन्त्र्ये न चैव हेतु· स्यात् ।
यत्पुनरभिहितमासामृक्थ बहुधेनि तद्युक्तम् ।
उत्सृष्टविषय एष ह्युक्तो यत्स्त्री न रिक्थवती ।
अस्यापवाद उक्तो भवता सशोध्य शास्त्रार्थं ।
निर्णयमृषिभि· ख्यात सक्षेपेणाङ्ग वच्म्यत्र ।
'प्राप्त शिल्पैस्तु यद्वित्त प्रीत्या चैव यदन्यतः ।
भर्तु· स्वाम्य भवेत्तत्र शेष तु स्त्रीधनं भवेदिति ।' कातीय. ।
अत्रच भवदुक्तस्त्रीधनहेतो· भिन्नहेतुभ्य· ।
शिल्पादिहेतुतोऽपिच लब्ध रिक्थ लभेत पतिरेव ।
तद्भिन्नहेतुलब्ध सर्वं नारीति सक्षेपः ।
विवृतश्चासौ दयया कातीयेनैव सर्वोऽर्थ. ।
"सौदायिक धन प्राप्य स्त्रीणा स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्त तत्प्रजीवनम् । इति ।"
'सौदायिके सदा स्त्रीणां स्वातन्त्र्य परिकीर्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ।' इति च ।
सौदायिकंच विवृत कातीयेनैव सवित्त्यै ।
'ऊढया कन्यया वापि पत्युः पितृकुलेऽथ वा ।
भर्तुः सकाशात् पित्रोर्वा लब्धं सौदायिक स्मृतम् ।' इति ।
स्थावरविषये नारदवचनादस्त्यत्र सङ्कोचः ।

'भर्त्रा प्रीतेन यद्दत्त स्त्रियै तस्मिन् मृतेऽपि तत् ।
सा यथाकाममश्नीयात् दद्याद्वा स्थावरादृते ।' इति ।

कोऽसौ स्वतन्त्रभाव ? तमिम तनुते विशिष्य कातीय —

'न भर्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णव ।
यदि ह्येकतरस्तेषां स्त्रीधन भक्षयेद्बलात् ।
स वृद्धिं प्रतिदाप्य स्यात् दण्ड चैव समाप्नुयात् ।
तदेव यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्वकम् ।
मूलमेव तदा दाप्यो यदा स धनवान् भवेत् ।
अथ चेत् स द्विभार्य स्यात् न च ता भजते पुन ।
प्रीत्या विसृष्टमपि चेत् प्रतिदाप्य स तद्बलात् ।' इति ।
यदि पुनरसमर्थैषा रिक्थैरेतैस्तु पणनाय ।
पित्रादिरक्षण स्यात् काले तत्रेति बोधयितुम् ।
रक्षति पितेति वचन सामान्येनात्र सम्प्रोक्तम् ।
न तु भवदुक्तां रीतिं स्मृत्वा तत्प्रोक्तदोषत्वात् ।
स्त्रीणामिवात्र पुसामयोग्यताया निरासएवेति ।
वचनात् सिध्येत् तस्मान्नपक्षपातोस्ति नारीषु ॥

यथाहापस्तम्ब.—

'सर्वे हि धर्मयुक्ता भागिनो द्रव्यमर्हन्ति ।
यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभाग कुर्वीते'ति ।

एव बृहस्पतिरपि—

'सवर्णजोऽप्यगुणवान् नार्ह. स्यात् पैतृके धने ।
तत्पिण्डदा श्रोत्रिया ये तेषा तदभिधीयते ।
उत्तमर्णाधमर्णेभ्य. पितर त्रायते सुतः ।

अतस्तद्विपरीतेन तेन नास्ति प्रयोजनम् ।
तया गवा किं क्रियते या न धेनु र्न गार्भिणी ।
कोऽर्थ पुत्रेण जातेन यो न विद्वान् न धार्मिक ।
शास्त्रशौर्यार्थरहित तपोविज्ञानवर्जित ।
आचारहीन. पुत्रस्तु मूत्रोच्चारसमस्तु सः ।' इति ।
वैतण्डि—नन्विह ते ते तत्तत्प्रमाणसिद्धेषु रिक्थेषु ।
स्वातन्त्र्यभाज इति यत् नार्यस्वातन्त्र्यवचन तत् ।
मूलविहीनं कथमिव शास्त्रकृता प्रोचि तत् ब्रूहि ।
सुन्दर—स्यादयमन्ते वाद. सर्वं निर्णीय यदि नोक्तम् ।
तादृशकालेनैव कश्चित् जानीत यद्रूया. ।
उत्तरपक्षे ज्ञाते सर्वत्रास्त्येव शङ्केयम् ।
'एव सम्यग्युक्तौ कथमिव पूर्वं वदेत् सदुष्पक्ष ।' इति ।
अथवा निश्चितरीत्या पुरुषस्यैवास्ति नैवास्याः ।
स्वातन्त्र्यमेतदेव च वादस्यावेहि मूल भो ।
अथ काठरमाठरादय मन्दा, पूर्वपक्षे दृढनिश्चया ।
"सुन्दर सुचिरं जीव प्रोद्धृतहृदया निरस्यपक्षात् स्म ।
भवता, सुचिरात् कालात् पूर्व पक्ष हि धृतवन्तः ।
बहुधा ह्यनेन कथित युक्त्या चैतेन निष्कृष्टम् । '
इति वैतण्डिकं वीक्षमाणा सप्रश्रयमभिनन्दान्ति ।
माण्डव्यकारण्डवादयो मध्या पुन सन्दिहाना ।
"सुन्दरजैवातृक ते वाक्पीयूषेण सन्देहः ।
नाशनहेतु नष्टो जीवेमेत पर तु निर्णीताः"। इति प्रशंसन्ति।
नाभागनन्दशङ्करादयस्तु निश्चितमतय ।
"सुन्दर बहुधा मृष्टं निर्णीत चैव पक्षमिमम् ।

श्रुत्वा संवदमानां सुतरां नन्दाम ते सूक्तिम् ।”
इति प्रशस्याशिष प्रयुञ्जते ॥
कथयित्वैव सर्वे रीतिं तामेव साश्रित्य ।
धर्मान् विदधत एव प्रापन् सर्वेष्टसिद्धिं स्वाम् ।

इति पण्डितप्रवरवेदान्तविशारदशिवसुब्रह्मण्यशास्त्रिण
कृतिषु अविवनसंवादपरिशिष्टम्
(स्त्रीस्वातन्त्र्य) सम्पूर्णम् ॥
श्रीशिव शरणम्

———

अथ मिश्रश्रेढीमिश्रकुट्टाकारपरिच्छेदस्तृतीय.

अथ मिश्रश्रेढीमिश्रकुट्टाकारपरिच्छेदो व्याख्यायते। अस्मिन् परिच्छेदे प्रश्नतद्भङ्गेषु यथासम्भवमुपकरणाना वर्ग वर्गमूल घन घनमूल सङ्कलित चितिधन वर्गचितिधन घनचितिघन श्रेढीफलानामानयनाविधिरार्यभटीये गणितसारे द्रष्टव्य.। इह तु ग्रन्थविस्तरभयान्न प्रदर्श्यते। अत्रादावार्यया प्रश्नत्रय व्यञ्जयति॥

अथ सङ्कलितघनैक्याद्घनपदयोगाच्च वर्गघनयोगात्।
विकलावशेषजाताद्दिनमभ्यूह्य विवेकिना पुसा॥ १॥

अत्र पदशब्देन विकलाशेषो गच्छ उच्यते। विकलावशेषजाताद्वर्गघनयोगाच्च विवेकिना पुसा दिनमभ्यूह्यम्। अत्र यद्यपि सङ्कलितादियोगो मुख्यवृत्त्या विकलाशेषजातो न भवति तथापि योगिना तज्जातत्वमवलम्ब्य तथोक्तम्। एषा भङ्गार्थमार्यामाह—

कथितमिहयद्यदैक्य तस्मिंस्तस्मिंश्च विहितघनमूलम्।
पूर्णतया घनमूलं यद्यत्तत्ताद्विलिप्तिकाशेषम्॥ २॥

इह यद्यदैक्य कथित तास्मिंस्तास्मिंश्च विहितघनमूले सति पूर्णतया यद्यद्घनमूलं तत्तदत्र विलिप्तिकाशेष भवेत्। विलिप्तिका शेषाज्ज्ञातादिष्टदिनानयनं प्रागेवोक्तम्। अतस्तदत्र न वक्तव्यम्। अथ प्रश्नान्तरमार्ययाह—

घनचितिघनवर्गैक्याद्विपूर्वलिप्ताग्रसम्भवाद्दिवसान्।
सद्यस्समीक्षते यः स वेद गणितानि वेद वसुमत्याम्॥ ३॥

यो विपूर्वलिप्ताग्रसम्भवाद्घनचितिघनवर्गयोरैक्याद्दिवसान् सद्यस्समीक्षते स एव वसुमत्या गणितानि वेद। विपूर्वलिप्ता॰ विलिप्ता.। एतत्प्रश्नभङ्गार्थमार्यामाह॥

घनचितिघनवर्गैक्ये कृतवर्गपदेऽत्र यो भवच्छेष' ।
एतस्य वर्गमूल यत्तद्विकलावशेष स्यात् ॥ ४ ॥

स्पष्टोऽर्थः । अथाऽर्यया प्रश्नान्तरमाह—

लिप्ताषष्ठ्यशाग्रे जातात्सङ्कलितघनचितिघनैक्यात् ।
यो भवति चितिघनोऽस्माद्यो दिननिवह वदत्यसौ धीमान् ॥ ५ ॥

अथैतत्प्रश्नभङ्गार्थमार्यामाह—

षड्गुणितादुद्दिष्टात् पूर्ण घनमूलमिह च यत्तस्मात् ।
वर्गभव मूल यत् तस्माद्द्विघ्नात् पद विलिप्ताग्रम् ॥ ६ ॥
इह षड्गुणितादुद्दिष्टाद्यत् पूर्णं घनमूल ।
तस्माद्वर्गभव मूल विलिप्ताग्र भवति ।
अथार्यया प्रश्नान्तर व्यनक्ति
पदकृतिसङ्कलितैक्याल्लिप्ताषष्ट्यंशशेषसञ्जातात् ॥
इष्टदिनानां निवहश्शक्य सुधिया सुखेन विज्ञातुम् ॥ ७ ॥

अत्र पदशब्दो गच्छवचनः । लिप्ताषष्ट्यशशेषजातात् पदकृतिसङ्कलितानां समासादिष्टदिननिवहः सुधिया सुखेन विज्ञातु शक्यम् । शक्यमित्यव्यय शक्यमरविन्दसुरभिरिति कालिदास. ॥

अथैतत्प्रश्नभङ्गार्थमार्यामाह—

कृतिपदसङ्कलितैक्यै सङ्कलित स्यात् कृशानुभिर्भक्ते ।
सङ्कलिते नयनहते विहितपदे शेषमत्र विकलाग्रम् ॥ ८ ॥

कृतिवर्ग. पद गच्छ. सकलित प्रसिद्धम् । ऐक्य योगः विकला शेषभवाना कृतिपदसकलितानामैक्ये कृशानुभिस्त्रिभिर्भक्ते सति लब्ध-संकलितं स्यात् । अथैवमागते सकलिते नयनहते विहितवर्गमूले च सत्यत्र शेष विकलाग्र भवति । अथार्यया प्रश्नान्तरमाह ।

योऽम्बरचरेन्द्रलिप्ता पूर्णरसांशावशेषजातेन ।
वर्गचितिघनेन दिन विद्याद्विद्याविशेषवानेषः ॥ ९ ॥

लिप्तापूर्णरसांशा विलिप्ता शिष्ट स्पष्टम् । अथैतत् प्रश्नभङ्गार्थमार्यामाह–

त्रिगुणाद्वर्गचितिघनाद्यत् पूर्णत्वेन घनपद भवति ।

तद्ग्रहविकलाशेष भवतीति विपश्चिता विनिर्देश्यम् ॥ १० ॥

त्रिगुणाद्विकलाग्रभावात् वर्गचितिघनाद्यत् पूर्णत्वेन घनमूल भवति तद्ग्रहविकलाशेष भवतीति विपश्चिता विनिर्देश्यम् ।

अथार्यया प्रश्नान्तरमाह—

घनवर्गवर्गचितिघनसङ्कलितसमासत' समुद्दिष्टात् ।

खचरविलिप्ताग्रभवात् कथमपि गदितुं दिन बुधैश्शक्यम् ॥ ११

समासो योग । खचरविलिप्ताग्रवशात् समुद्दिष्टात् घनवर्गवर्गचिति-घनसङ्कलितसमासतो बुधैर्दिन कथमपि कथितु शक्यम् ।

अथैतत्प्रश्नभङ्गार्थमार्यामाह—

अत्रोद्दिष्टे राशौ सागरभक्ते फल भवति यत्तत् ।

वर्गचितिघनस्त्वमुना विकलाग्र साधयेद्बुध प्राग्वत् ॥ १२ ॥

अत्रोद्दिष्टे राशौ सागरैश्चतुर्भिर्भक्ते यत् फल भवति तद्विकलाग्रजातो वर्गचितिगन. । अमुना बुध प्राग्वद्विकलाग्रं साधयेत् ॥

अथार्यया प्रश्नान्तरमाह—

कृतिघनसङ्कलितैक्यात् खचरविलिप्तावशेषसम्भूतात् ।

वासरचय वदेद्यो वागीशो भवति भूतले स पुमान् ॥ १३ ॥

स्पष्टोऽर्थः । अथैतत् प्रश्नभङ्गार्थमार्यामाह—

कृतिघनसङ्कलितैक्ये वह्निहृते भवति वर्गसङ्कलितम् ।

तस्माद्गगनचराणां प्राग्वद्विकलावशेषमानेयम् ॥ १४ ॥

वर्गसङ्कलित वर्गचितिघनम् । शिष्टं स्पष्टम् ॥

अथार्यया प्रश्नान्तरमाह—

विकलाशेषेष्टांशश्रेढ्यां विकलावशेषभक्तायाम् ।

यत्तेनाशमुखाभ्यामुत्तरतश्रेष्ठादिनचयो वाच्यः ॥ १५ ॥

'इष्ट व्येक दलितं सपूर्वमुत्तरगुणं समुखमध्यम् । इष्टगुणितमिष्टधन' (आर्यभटीये गणितपादे श्लो. १९) मित्यार्यभटीयसूत्रानीतमिष्टधनमत्र-श्रेढीशब्देनोच्यते । विकलाशेषस्य रूपांशद्व्यंशत्र्यंशादीष्टांशजाता श्रेढी विकलाशेषेष्टांशश्रेढी । तस्यां विकलावशेषभक्तायां शुद्धायां सत्यां यत् फलं भवति तेनांशादिमोत्तरैश्च कथितैरिष्टदिननिचयो वाच्य ॥

अथैतत्प्रश्नभञ्जनायार्यामाह—

अशहते 'फलराशौ विमुखे चोत्तरहृते हते द्वाभ्याम् ।
रूपयुतेऽशकगुणिते यत् स्याद्विकलाग्रमेव तद्भवति ॥ १६ ॥

उद्दिष्टे फलराशावुद्दिष्टेनाशेन गुणिते तदुद्दिष्टेन मुखेन हीने तदुद्दिष्टेनोत्तरेण भक्ते ततो रूपसहिते पुनश्चाशगुणिते यत्स्यात् तद्विकलाग्र भवति । व्यक्त्यर्थमेतदुदाहरणेन प्रदर्श्यते । अत्र ग्रहस्य कल्पितो विकलाशेषश्शतसङ्ख्य । अस्य चतुर्थांश पञ्चविंशतिसङ्ख्य । इदामिष्टम् । अत्र प्रथमं श्रेढीफलमानीयते । इष्टम् (२५) । एतद्व्येक चतुर्विंशतिसङ्ख्यम । एतद्दलित द्वादशसङ्ख्यम् । इदमत्र कल्पिते-नोत्तरेण त्रिकेण गुणित षट्त्रिंशत्सङ्ख्यम् । एतत् कल्पितेन मुखेन चतुष्टयेन युक्त चत्वारिंशत्सङ्ख्यम् । इद मध्यधनम् । एतदुद्दिष्टेन पञ्चविंशतिसङ्ख्येनाशेन (२५) गुणित सहस्रसङ्ख्यम् जातम् । इदमत्र विकलाशेषेष्टाशश्रेढी । इय विकलाशेषेण शतसङ्ख्येन भक्ता शुध्यति । अत्र फलं दशसङ्ख्यम् । अस्मिंश्चांशे मुखे चोत्तरे च कथिते सति विकलाग्रमानेतु शक्य । तस्मात् कथितैरेभिश्चतु-र्भिर्विकलाग्रमानीयते । इह फलराशिर्दशसङ्ख्य· । अयमशेन चतुष्टयेन गुणितश्चत्वारिंशत्सङ्ख्य· । अयं मुखेन चतुष्टयेन हीनष्षट्त्रिंशत्-सङ्ख्यः । अयमुत्तरेण त्रिकेण भक्तो द्वादशसङ्ख्यः । एष द्वाभ्या गुणितश्चतुर्विंशतिसङ्ख्यः । अय रूपेण सहित· पञ्चविंशतिसङ्ख्य·

अय पुनरप्यंशेन चतुष्टयेन गुणितश्शतसङ्ख्य । एष ग्रहस्य विकलाशेष. । अथार्ययोपसहराति ॥

दिङ्मात्रेण मयाऽस्मिन् कुट्टाकारः प्रदर्शितो ग्रन्थे ।
शेषोऽखिलो विशेषो भाष्यादौ दृश्यतां विपश्चिद्भिः ॥ १७ ॥

भाष्यमार्यभटीयविषयं भास्कराचार्यविरचितम् । आदिशब्देन भट्टब्रह्मगुप्तविरचितब्रह्मसिद्धान्तादिरभिधीयते । शिष्ट सुबोधम् । अथैष ग्रन्थो न स्वतन्त्रः । किन्त्वार्यभटाचार्यप्रणीतकुट्टाकारविषयसूत्रयुग्मस्य कुट्टाकारशिरोमणिनामधेयो व्याख्याविशेष एवेत्यार्ययाह—

आचार्यार्यभटोदितकुट्टाकारार्थसूत्रस्य ।
कुट्टाकारशिरोमणिनामा व्याख्याविशेष एवैष ॥ १८ ॥

इयमवतारिकया विवृतार्था ॥

अथेमं ग्रन्थमभ्यस्यतां फल दर्शयितुमार्यामाह—

कुट्टाकारशिरोमणिमिममभ्यस्यति दृढेन यो मनसा ।
तरणे प्रसादतोऽय सहसा तान्त्रिकशिरोमणिर्भवति ॥ १९ ॥

इति श्रीदेवराजविरचिते कुट्टाकारशिरोमणौ मिश्रश्रेढीमिश्रकुट्टाकारपरिच्छेदस्तृतीय ॥

इम कुट्टाकारशिरोमणिं दृढेनाव्यापृतेन मनसा योऽभ्यस्यति सशीलयति स तरणेरादित्यस्य प्रसादतस्सहसा तान्त्रिकशिरोमणिर्भवति । तान्त्रिको ज्ञातसिद्धान्तः ।

सद्वर्णसूत्रकलिता समवृत्ताऽतुला नवा । समर्पिता महालक्ष्म्यै टीका मुक्तावली मया ॥

इत्यत्रिकुलाभरणस्य स्कन्धत्रयवेदिन सिद्धान्तवल्लभ इतिप्रसिद्धापरनाम्न श्रीवरदराजाचार्यस्य तनयेन देवराजेन विरचिताया कुट्टाकारशिरोमणिटीकाया महालक्ष्मीमुक्तावल्या मिश्रश्रेढीमिश्रकुट्टाकारपरिच्छेदस्तृतीय । समाप्ता चेयं महालक्ष्मीमुक्तावली नाम कुट्टाकारशिरोमणिटीका ॥

रणसम्भवात् । अपूर्वनिष्ठावघाताद्युद्देश्यताव्यावृत्तये स्वयंप्रार्थितवृत्तीति, क्रत्वर्थलक्षणे चापूर्वावच्छिन्नत्वमेवोद्देश्यतायां निवेशनीयमिति नोभयाभावघटनाप्रयासोऽपि । सर्वेषामेव क्रत्वर्थानामुद्देश्यतायां मुख्यविशेष्यतया उद्देश्यतावच्छेदकतया वा अपूर्वस्यावच्छेदकत्वमिति नाव्याप्तिः । अपूर्वनिष्ठावघाताद्युद्देश्कतायामपूर्वस्यानवच्छेदकत्वेऽपि श्रुतव्रीह्यादिनिष्ठोद्देश्यतामादायैव अवघातादिषु लक्षणसमन्वय इति दिक् ॥

यदि तु वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यनेन बृहस्पतिसवनस्य वाजपेयप्रयोगबहिर्भूतत्वस्यावगमात् वाजपेयस्वरूप इव तज्जन्यपरमापूर्वस्वरूपेऽपि आनर्थक्यात् प्रकरणकल्पितवाक्येन वैमृधन्यायेन वा बृहसवस्य नापूर्वसाधनीभूतवाजपेयोद्देशेन विधानम् । अपि तु स्वाराज्यभूतफलसाधनीभूतवाजपेयोद्देशेन तत्र च विशिष्टोद्देशेन विधाने विशेषणोद्देशेनापि विधानस्यावश्यकत्वात् स्वाराज्योद्देशेनापि बृहस्पतिसवविधिरिति सर्वेष्वेव स्वयप्रार्थितवृत्त्युद्देश्यताघटितलक्षणेषु बृहस्पतिसवे नव्योक्तहीषादिस्थलीयप्रकारे च अतिव्याप्तिः । अपूर्वावच्छिन्नत्वघटितक्रत्वर्थत्वलक्षणे, चाव्याप्तिरिति सूक्ष्ममीक्ष्यते तदा पुरुषार्थत्वलक्षणे स्वोद्देश्यतानवच्छेदकत्व स्वयप्रार्थितविशेषणम् । स्वपद पुरुषार्थत्वेनाभिमतपरम् । स्वाराज्यादेस्तु वाजपेयादिनिष्ठबृहस्पतिसवाद्युद्देश्यतावच्छेदकत्वात् नातिव्याप्तिः । स्वयप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयतावत्व च क्रत्वर्थत्वमतो नाव्याप्तिः । अगन्मेत्यस्य चापूर्वीयस्वर्गोद्देशेन विधौ अपूर्वोद्देशेन विधेरावश्यकत्वात् अपूर्वनिष्ठोद्देश्यतामादाय सर्वमनवद्यम् । तच्चोभयविधमप्यङ्ग प्रत्येक द्विविधम् । सिद्धरूप, क्रियारूपं चेति । तत्र व्रीह्यादिकं सिद्धरूपं क्रत्वर्थं, क्रियारूपं क्रत्वर्थं प्रयाजादिकम् । एवं सिद्धरूप पुरुषार्थं दधिगोदोहनादि, क्रियारूपं पुरुषार्थं ज्योतिष्टोमादि । क्रियारूप च क्रत्वर्थं द्विविधं सन्निपत्योपका-

रकमारादुपकारक चेति तत्र द्रव्यदेवतान्यतरनिष्ठोद्देश्यतानिरूपिताविधेयताशालि कर्म सन्निपत्योपकारक यथा प्रोक्षणावघातपशुपुरोडाशादि, अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीय पशुपुरोडाशमेकादशकपाल निर्वपेदित्यनेन उत्पन्न पशुपुरोडाशयागो हि स्वीयोद्देशेन पशुयागीयदेवतासस्कारक' इत्युक्त दशमे। अत्र यस्य पर्णमयी जुहूर्भवति इत्यादौ पर्णतादेस्सिद्धरूपक्रत्वर्थत्वस्य द्रव्यनिष्ठोद्देश्यतानिरूपितविधेयताशालित्वादतिव्याप्ति। अत कर्मत्वोपादान। यत्तु द्रव्यदेवतान्यतरसस्कारक कर्म सन्निपत्योपकारकमिति तन्न। यजमाननिष्ठप्रयाजादिजन्यादृष्टव्यावृत्तदृष्टादृष्टसस्कारमात्रवृत्तिसस्कारस्यैकस्याभावेन तद्धटित लक्षणासभवात्। केचित्तु द्रव्यदेवतान्यतरनिष्ठापूर्वसाधनत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताशालित्व सन्निपत्योपकारकत्वम्। अन्यथा पुरुषोद्देशेन विधीयमानदीक्षणीयादेरिव स्वर्गकामपुरुषाद्युद्देशेन विधीयमानज्योतिष्टोमादेरपि सन्निपत्योपकारकत्वापत्तेरित्याहु। तदपि न, यूपाद्युद्देशेन विधीयमानच्छेदनादावव्याप्ते। तस्य अदृष्टरूपफलादिस्वरूपे आनर्थक्याभावेन अपूर्वीयत्वेन उद्देश्यत्वात्। ज्योतिष्टोमास्तु पुरुषोद्देशेन विधीयमानत्वमसिद्ध भावनाया भाव्यापेक्षाया सिद्धरूपस्य भाव्यत्वायोगेन स्वर्गकामादिपदस्य लक्षणया स्वर्गादिपरत्वात् यत्तूद्भिदादे पश्वादिद्रव्योद्देशेन विधानात् तत्रातिव्याप्तिरिति विभाव्यते तदा अस्तु प्रकृतलक्षणे क्रत्वर्थत्वनिवेशः। अस्तु वा अस्मदुक्तरीत्या अपूर्वावच्छिन्नत्वनिवेशः। न त्वपूर्वीयत्वावच्छिन्नत्वस्य उद्देश्यतायां विशेषणत्वमिति ध्येयम्। निरुक्तसान्निपत्योपकारकभिन्नक्रत्वर्थाक्रियात्वमेवारादुपकारकत्वम्। सान्निपत्योपकारकेऽतिव्याप्तिवारणाय भिन्नान्तम्। पुरुषार्थज्योतिष्टोमादिक्रियायामतिव्याप्तेः क्रत्वर्थेति। सिद्धरूपक्रत्वर्थवारणाय क्रियात्वोपादानम्। एतेषां

लक्षणाना आकरोक्ततल्लक्ष्यानुगत्यननुगती सुधीभिर्विभावनीये इत्यलम्। एवविधाङ्गत्वे च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानि षट् प्रमाणानि। अथ केय श्रुति , न तावत् शक्तशब्दमात्र, अङ्गत्वप्रमाणविभाजकोपाधिभूतश्रुतित्वस्य उक्तप्रमाणत्वव्याप्यत्वावश्यकत्वात् निरुक्तशब्दत्वरूपश्रुतित्वस्य च तद्व्याप्यत्वासभवात्। न हि शब्दमात्रमङ्गत्वे प्रमाण घटशब्दस्य उद्देश्यविधेयान्यतरबोधकत्वेनाङ्गत्वे प्रमाणत्वात् लोकवेदाधिकरणन्यायेन तदभेदादेव लौकिकघटादिशब्दानामपि तत्त्वोपपत्ते श्रुतित्वस्य तत्साधारण्येऽपि क्षातिविरहइति वाच्यम्। तथापि शब्दमात्रस्य वेदघटकत्वे प्रमाणाभावेन वेदाघटकलौकिकशब्दे विध्यघटकार्थवादादिशब्दे चाङ्गत्वप्रमाणत्वासभवात्। उक्तश्रुतित्वस्य च तत्र सत्वेन तदव्याप्यत्वात्। गौणलाक्षणिकयोरपि शक्तत्वेनातिप्रसङ्गाच्च। न हि तयो श्रुतित्वमिष्टम्। तथात्वे सक्तून् जुहोतीत्यादौ सक्तूत्वादीना श्रौताङ्गत्वव्यवहारापत्ते। किं च श्रुतित्वस्य प्रातिपदिकादिसाधारण्ये धेनुर्दक्षिणेत्यादिवाक्यीयविनियोगस्थले श्रौताङ्गत्वव्यवहारापत्ति। नापि गौणलाक्षणिकत्वाभाववद्विभक्तित्वम्। सक्तून् जुहोतीत्यादौ गौण्या लक्षणया वा करणत्वादिपरद्वितीयाया॰ श्रुतित्वाभावात् अभाववदन्त, प्रातिपदिकादिषु श्रुतित्वव्यवहाराभावात् विभक्तित्वोपादानम्। निरपेक्षो रव श्रुतिरिति प्राचीनप्रवादोऽपि एतदर्थतात्पर्यग्राहकएवेति वाच्यम्। सबन्धार्थकषष्ठ्यादौ अतिव्याप्ते॰ व्रीहीन् प्रोक्षतीत्यादिवाक्येषु व्रीह्यादिपदोत्तरद्वितीयाया अपि समानाधिकरणपूर्वपूर्वपक्षेलाक्षणिकत्वेनाव्याप्तिश्चेति चेत्। अत्र नव्याः। अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचक॰ शब्दः श्रुति. स च व्रीहिनिवहन्ति व्रीहिभिर्यजेत इत्यादौ द्वितीयातृतीयादिः। प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीत्यत्र कर्मत्वाविशिष्टवाचकत्वप्रत्ययेऽतिव्याप्तेः प्राधा-

न्येनेत्याहु अत्र कृतिकारकत्व कृत्यन्वितकर्तृत्वाद्यन्यतमम्। न तु कृत्यन्वितकर्तृत्वाद्यन्यतमान्वितत्वम्। तृतीयादेस्तदवाचकत्वेनाव्याप्त्यापत्ते.। असम्भवस्तु नास्ति कर्मत्वरूपोद्देश्यतावाचकद्वितीयाया लक्षणसत्वात्। अङ्गत्वैकदेशोक्तान्यतरबोधकत्वात् द्वितीयादेरङ्गत्वप्रमाणत्वमिति फलयितुमङ्गत्वघटकीभूतेति न तु अङ्गत्वघटकीभूतत्वस्य लक्षणघटकत्व वैयर्थ्यात्। अत्राङ्गत्वलक्षणे कर्मत्वरूपोद्देश्यतायाः तदितरकर्तृत्वाद्यन्यतमस्य च स्वातन्त्र्येण निवेशात् श्रुतिलक्षणे तयोरन्यतरत्वेन निवेश.। वस्तुतस्तु उद्देश्यतात्वावच्छिन्नप्रतियोगिताकभेदकर्तृत्वादिप्रत्येकभेद—घटितकर्तृत्वकरणत्वसम्प्रदानत्वापादानत्वाधिकरणत्वान्यतमत्वावच्छिन्न—प्रतियोगिताकभेदघटितान्यतरत्वापेक्षया कर्तृत्वाद्यवाच्छिन्नप्रत्येकभेदघटितकर्मत्वकर्मत्वसाधारणान्यतमत्वस्य लघुत्वात्। कर्तृत्वकरणत्वकर्मत्वसम्प्रदानत्वापादानत्वाधिकरणत्वान्यतमस्य प्राधान्येन वाचकश्शब्द श्रुतिरित्येव एतल्लक्षणनिष्कर्ष॰। उक्तान्यतमवाचकत्व च उक्तान्यतमनिष्ठसम्बन्धत्वावच्छिन्नशक्त्यानिरूपकत्वम्। अतस्सम्बन्धत्वेन उक्तान्यतमानिष्ठशक्तिनिरूपिकायामपि षष्ठ्यां नातिव्याप्ति। न च गोदोहनेन पशुकामस्य प्रणयेदित्यत्र षष्ठीश्रुत्या गोदोहनस्य पश्वङ्गत्वमिति व्यवहारात् षष्ठ्या श्रुतित्वे इष्टापत्तिरिति वाच्यम् तथात्वे सप्तदशारत्नि-र्वाजपेयस्य यूप इत्यत्र सप्तदशारत्नित्वस्य श्रुतिविनियोगालिप्सया वाजपेयाङ्गत्वापत्तौ वाक्यीययूपाङ्गत्वानुपपत्ते॰। अथ तत्र श्रौतविनियोगासम्भवेऽपि यूपपदानर्थक्यभिया तदनङ्गीकारः तदधिकरणे हि वाजपेयस्य वा उद्देश्यत्व यूपस्य वेति सन्दिह्य यूपस्योद्देश्यतायां बहुव्रीहेरुद्देश्यसमर्पकत्वे एकप्रसरताभङ्ग यूपपदस्य तत्वे तु यूपोद्देशेन सप्तदशारत्नित्वविधौ समासार्थमुख्याविशेष्यभूतसम्बन्धिनोऽनन्वयात् समासभङ्गापत्तिः। सप्तदशारत्नित्वविशिष्टद्रव्यस्याभेदसम्बन्धेन विधिस्तु

## मोक्षतत्त्वम्.

अथातो भक्तिसिद्धान्ते मोक्षतत्त्व निरूप्यते ।
भक्तिरेवौपनिषदमुपासनमितीष्यते ॥

### लोकानुरोधः

अथात्मपरमात्मयाथात्म्यानिर्णये सति स्वात्मसाक्षात्कारे च सति मोक्षसाधनीभूता भक्ति स्वयमेवोत्पद्यते । तया च परया भक्त्या मोक्ष सम्पद्यते इति भक्तिसिद्धान्त· । तत्र च मोक्षदशाया परब्रह्मानुभवतत्त्व जिज्ञासामहे । परेत्वत्र मोक्षवादे एव विवदन्ति—

"मोक्षस्य परमानन्दरूपताभ्युपगमोऽपि मन्दफल· । प्रत्यक्षविरोधश्च । न च ससरन्तस्तथाविधमानन्दमनुभवन्ति । न चाभिभूततयाऽननुभव· । स्वारसिकस्य स्वप्रकाशस्यानन्दस्याभिभवायोगात् । न च प्रेमास्पदतयाऽऽत्मन· आनन्दतासिद्धि । आत्मनि प्रेमासिद्धे· । शरीरोपघाते हि दु खोदयात् तदुपघातपरिहार सर्वे प्रार्थयन्त इत्यात्मनि प्रेमाभिमानः ॥

किञ्च—ससारिणां स्वारसिकपरमानन्दो नानुभूतपूर्व इति कथं निर्णिबन्धन आत्मनि प्रेम । अतो विषयविशेषसम्भोग एवानन्द इति सुन्दरम् । मोक्षस्तु—सांसारिकदु खोपशमात् पुरुषार्थ इति पुष्कलम्" ॥ इति ॥ (तत्त्वालोकः)

पराशरमाधवीये त्वेवं पठ्यत—(१–२०)

"प्रतीयमानजगदाकाररहित शून्याद्विलक्षणं चेत् ब्रह्म तर्हि तत्कीदृश बुद्ध्यादावारोपयितव्यमिति चेत्—इदानीं प्रष्टुं यादृशमनूदितं तादृशशब्दमेव तदिति बुद्धि समाधत्स्व । दृष्टान्तं चेत्पृच्छसि

न वय वक्तु शक्नुम । तत्समस्य वस्त्वन्तरस्याभावात् । यदि शिष्य-व्युत्पादनाय दृष्टान्ताभ्यासोऽपेक्षितस्तर्हि अद्वैताकारे सुषुप्तिर्निदर्शनम् । पुरुषार्थस्वरूपत्वे विषयानन्दो निदर्शनीय । अशेषशङ्कानिवृत्त्यपेक्षा चेत् ब्रह्ममीमासा पठ" इत्यभिहितमस्ति ॥

अतएवाचार्यै कूरेशैरेवमुच्यते—(वैकुण्ठस्तव.).

रूपेण सद्गुणगणै. परया समृद्धया
भावैरुदारमधुरैरपि वा महिम्ना ।
तादृक्तदीदृगिदमित्युपवर्णयन्त्य'
वाचो यदीयविभवस्य तिरस्क्रियायै ॥ इति ॥

तस्मात् मानान्तरविरहेण लोकानुभवमनुरुद्धय निरूपणीयतया शृङ्गारादिरसानुभवनिदर्शनेन मोक्षानन्दनिरूपणं श्रूयताम्—स्वर्ग. सुखं अनुकूलं प्रीति रति प्रेम भक्ति' आनन्द. रस. इत्यादिभिश्शब्दैः काचिदात्मनो दशाऽभिधीयते इत्यविप्रतिपन्नमेतत् । सैवैकाग्राविक्षिप्त-चित्तवृत्तित्वेन योग इत्युच्यते । आनन्द इत्यप्युच्यते । विगलित-वेद्यान्तरत्वस्यैवानन्दरूपत्वात् । सा हि प्रकृतिवैचित्र्यात् विचित्राऽस्ति॥

"य एव वैदिका' शब्दाः त एव लौकिका." इति शब्दैक्याधि-करणे मीमांसायामभिहितम् । तथा—लोके येष्वर्थेषु प्रसिद्धानि पदानि त एवार्था. वेदेऽपि स्वीकर्तव्या, नान्ये । अन्यथाऽतिप्रसङ्गात् । न च लौकिकपदपदार्थाश्रयणव्यतिरेकेण आगमेन शक्यमज्ञात वस्त्वन्तरमव-गमयितुम् ॥

अत एवोपनिषत्सु "रसो वै सः, रस ह्येवाय लब्ध्वा आनन्दी भवति, आनन्दो ब्रह्म" इत्यादयः शब्दा श्रूयन्ते । अत लौकिकै-रेव ऋषिभि लोकानुरोधिभिरेव न्यायैः दृष्टान्तैश्च प्रतिपाद्या. पुरुषाः बोधनीया इति प्रसिद्धमेवैतत् ॥

परिपूर्णपरब्रह्मानुभवलक्षणो मोक्षः परम पुरुषार्थ । स हि अनुकूलत्वेन विशिष्टब्रह्मणस्साक्षात्कार । तत एव लोकोत्तर . यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह । स हि न परिमिताकारगोचर इति परिपूर्ण इत्युच्यते। खद्योतस्फुरणवत् न सान्तर इत्यनवरत इति । सार-स्वतस्रोतोन्यायेन न विच्छिन्नप्रवाह इति नित्य इति । मधुरभेषज-न्यायेन मोक्षरूपप्रयोजनसाधनत्वेन नोपादेय इत्यनन्यप्रयोजन इति । न सावधिकरस इत्यनवधिकातिशयप्रिय इति । न हि परोक्षरूप इति विशदतम इति निरुच्यते ॥

एतादृश चानन्द लोकानुभवेन बुद्ध्यारोहाय जीवेश्वरयो. सम्बन्धरूपा. लोकसिद्धा भावा अभिवर्ण्यन्ते । यथा—पतिपत्नीभावः लक्ष्ययोधभाव स्वामिभृत्यभाव· पितृपुत्रभाव गुरुशिष्यभाव इत्याद्या.। अत एवेत्थमनुश्रूयते—पाञ्चरात्रपराशरसंहिताया (२९ पु)—

दासस्तद्विष्णुपत्नी च राजवत्पूजयेद्धरिम् ।
प्रपन्नानामिद सम्यक् विष्णोर्दास्य चतुर्विधम् ॥

पतिभार्यादिसम्बन्ध पितृपुत्रादिक तथा ।
स्वामिभृत्यादिसम्बन्ध शिष्याचार्यादिक तथा ॥

एतच्चतुर्विध दास्य विष्णोः प्रीतिकर सदा ।
सर्वेषा विष्णुसायुज्यसिद्ध्ये श्रुतिबोधितम् ॥ इति ॥

शृङ्गारवीरकरुणाद्भुतहास्यरौद्र-
बीभत्सवत्सलभयानकशान्तनाम्न. ।
आम्नासिषुर्दश रसानपरे वय तु
शृङ्गारमेव रसनाद्रसमामनाम ॥ (शृङ्गारप्रकाशः)

इति। अपरे पुन स्नेहभक्तिभ्या द्वादश रसानुररीकुर्वन्ति ॥

## शृङ्गाररसः

तत्र प्रथमं प्राणिमात्रसाधारणं शृङ्गाररससंस्कृतो भावः । तमनुरुध्य एवमुपदेशः—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥

इति कठे मुण्डके च श्रूयते । अत्र "विवृणुते तनूं स्वाम्" इति पदानि आस्वादयन्तु सहृदयाः ॥

विस्पष्टमेव वाजसनेयिनः पठन्ति "यथा प्रियया सपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति । छन्दोगा अपि—"यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमा" इति । उपबृंहणभूतानि पुराणान्यपि—

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतस्सा मे हृदयान्माऽपसर्पतु ॥ इति ।

सैषा प्रीतिरूपा भक्तिः परभक्तिः परज्ञानं परमा भक्तिरिति अवस्थात्रयवती भवति । आद्या विषयस्वभावजा साक्षात्कारेच्छात्मिका धीः । द्वितीया कादाचित्कः साक्षात्कारः । तृतीया निरन्तरानुबुभूषा । अनुभवस्तु अनुकूलत्वप्रकारकः आनन्दसुखरसादिपदवाच्यः विशिष्टविषयकस्साक्षात्कारः । कैङ्कर्यं तु भगवदभिमत्यनुरोधिनः सर्वे व्यापाराः मुक्तैश्वर्यप्रकरणप्रतिपादिताः इति विभागः ॥

अस्य च सर्वस्य शास्त्रार्थस्यायं लौकिको बुद्ध्यारोहक्रमः—कस्याश्चिद्वध्वाः मङ्गलगुणश्रवणेन स्वस्यानुरूप्यं मन्वान आचार्यादिस्थानीयैः पित्रादिभिः कारितकङ्कणबन्धः कश्चिद्वरः तत्प्राप्तये सर्वदा चिन्तनेन तत्परो भवति । तस्याः तदीयानां च वस्तूनां चिन्तनं निरतिशयप्रीतिरूपं सत् उपादीयमानं कदाकदा साक्षात्कारपर्यवसायि भवतीति वाञ्छारूपतया प्रियतममेव भवति ॥

अनेनानवरतचिन्तनेन सहजसौहार्देन च श्रीकृष्णरुक्मिणीन्यायेन तस्या अप्यय निरतिशयप्रियो भवति ॥

ततश्च निष्पन्ने कदाचित्साक्षात्कारे अनुबुभूषालक्षण अनुभवाभिनिवेश समुत्पद्यते । ततश्च प्रविशति अनुभवति प्राप्नोति । सैवावस्था—"न बाह्य किंचन वेद नान्तरम्, नान्यत्पश्यति नान्यत् शृणोति" इत्यादिना निरूप्यते । भगवानप्यत्रैवमाह—

प्रियो हि ज्ञानिनोऽत्यर्थमह स च मम प्रिय ।
उदारास्सर्वे एवैते ज्ञानी त्वात्मैव मे मतम् ॥
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वत ।
ततो मा तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥
ज्ञातु द्रष्टु च तत्त्वेन प्रवेष्टु च परन्तप ॥ इति ।

अत्र तात्पर्यचन्द्रिका—उत्कटदिदृक्षागर्भा तु परभक्ति साक्षात्कारहेतु साक्षात्कृते तु परिपूर्णानुभवाभिनिवेशलक्षणा परमभक्ति प्रवेशहेतुः । इति ॥

ततश्च प्रवेशानन्तर यावत्काल समाना भोग. । अन्योन्य च निरतिशयमानुकूल्यमित्यादिक सर्वमिह भाव्यम् ॥

अत्रेद प्राचीन पद्य कैङ्कर्यस्थानीयमास्वादनीयम्—

यदेव रोचते मह्य तदेव कुरुते प्रिया ।
इति वेत्ति न जानाति तत्प्रिय यत्करोति सा ॥ इति ।

अत्र प्रियास्थाने मुक्त प्रियस्थाने भगवन्त निवेश्य समाधिरनुसन्धेय. ॥

अत एवहि स पुरुषोत्तम इत्युच्यते—तथा हि—पुरु सनोतीति पुरुष' बहुप्रद इत्यर्थ । अतएव पत्न्यै बहुप्रदानात्पत्युः पुरुष इति लोके व्यवहारः । तथा चोपदिश्यते महर्षिभि.—

मित ददाति हि पिता मित भ्राता मित सुत ।

अमितस्य हि दातार भर्तार का नु लङ्घयेत् ॥

इति अनसूयां प्रति सीतावचन श्रीमति रामायणे । अयमर्थ श्रीविष्णुसहस्रनामभाष्ये पुरुषपदविवरणे श्रीरङ्गगद्यभाष्ये पुरुषोत्तमपदव्याख्याने च द्रष्टव्य ॥

किञ्चात्राचार्याणा द्रमिडोपनिषत्तात्पर्यरत्नावलीपद्य चानुसन्धेयम्—

पाञ्चालीगात्रशोभाहृतहृदयवधूवर्गपुभावनीत्या[1]
पत्यौ पद्मासहाये प्रणयिनि भजत प्रेयसीपारतन्त्र्यम् ।
भक्ति श्रृङ्गारवृत्त्या परिणमति मुनेः भावबन्धप्रथिम्ना
योगात्प्रागुत्तरावस्थितिरिह विरहो देशिकास्तत्र दूताः ॥

इति । तथा—सच्चरित्ररक्षायां–(३येऽधिकारे· ९६) श्रीविष्णुतत्त्ववचनमिदमुदाहृतम्—

शेषभुक्ति प्रशसान्ति मुनयस्तत्त्वदर्शिन ।
युवान· खलु वाञ्छन्ति ताम्बूल तरुणीमुखात् ॥ इति ।

## वीररसः

अथ वीररसानुभव —स हि लोकोत्तरकार्यविषयक· उत्साहविशेष·.

धनुर्गृहीत्वौपनिषदं महास्त्र शर ह्युपासानिशित सन्धीयत ।
आयम्य तद्भावगतेन चेतसा लक्ष्य तदेवाक्षर सोम्य विद्धि ॥
प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्य शरवत्तन्मयो भवेत् ॥
आत्मानं रथिन विद्धि शरीर रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।

[1] पाञ्चाल्या पद्मपत्राक्ष्या स्नायन्त्या जघन घनं ।
या स्त्रिय दृष्टवत्यस्ता पुभाव मनसा ययु ॥ इति महाभारतम् ।

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्त भोक्तेत्याहुर्मनीषिण ॥

इत्यादिवाक्यपरामर्शेन वीररसोऽनुभूयते । अत्र रसानुभव “ अनितर-कथनीयमात्मसवेद्यम् ” इत्युक्तरीत्या सहृदयाना विलक्षणसस्कारशालिनां वेदनीयो भवति । तस्मात् चर्वणाचातुर्यरहितानामाक्षेपस्य कस्याप्यव-काशो न विद्यते इत्यवधेयम् ॥

स हि वीररस' त्रिविध.–युद्धवीर दानवीरः दयावीर इति । त्रिविधोऽपि परिपूर्णः सुपुष्कलः भगवत्यनुसधातु युक्तः ॥

**भयानकरसः.**

अथ भयानकरसानुभवः—

यदिद किंच जगत्सर्वं प्राण एजति निस्सृतम् ।
महद्भय वज्रमुद्यत य एतद्विदुरमृतास्ते भवन्ति ॥
भयादस्याग्निस्तपति भयात्तपति सूर्य' ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥
भीषास्माद्वातः पवते भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम. ॥
अन्त. प्रविष्टश्शास्ता जनाना सर्वात्मा ॥

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत ॥

एष सेतुर्विधरण एषां लोकानामसम्भेदाय ।

अस्यार्थ'—भामती (३-२-२२) मर्यादानां च विधारक ब्रह्म । अन्यथा—अतिचपलस्थलबलवत्कल्लोलमालाकलितो जलनिधिरिलामण्ड-लमवगिलेत् । बडबानलो विष्फूर्जितज्वालाजटिलो जगत् भस्मसाद्भाव-येत् । पवन प्रचण्डो वाऽकाण्डमेव ब्रह्माण्डं विघटयेदिति ॥

मनुरप्येवमाह—

दण्डश्शास्ति प्रजास्सर्वाः दण्ड एवाभिरक्षति ।

दण्ड सुप्तेषु जागर्ति तस्मात् दण्डं विदुर्बुधा॰ ॥
सर्वो दण्डजितो लोकः दुर्लभो हि शुचिर्नरः ।
दण्डस्य हि भयादेव जगद्भोगाय कल्पते । इत्यादि ॥

एव भयानकरसस्य फलीभूत भाव श्रीभागवते महर्षिणा नारदेन एव निरूपित । यथा—(७-१-३२)

यथा वैरानुबन्धेन मर्त्य. तन्मयतामियात् ।
न तथा भक्तियोगेन त्विति मे निश्चिता मति ॥
कीटः पेशस्कृतो रुद्ध. कुड्यायां तमनुस्मरन् ।
सरम्भभययोगेन विन्दते तत्स्वरूपताम् ॥ इति ॥

**स्वामिभृत्यभावः**

तथा स्वामिभृत्यभावोऽपि तत्साध्यतया लक्ष्यते । तत्र रसानुभवस्तु भृत्यार्थं स्वामी, स्वाम्यर्थं च भृत्य इति न्यायानुसन्धानेन बोध्य । अय हि स्वाम्यभिप्राय. पूर्वाचार्यैरेवमनुसंहित.—

त्वदाश्रिताना जगदुद्भवस्थितिप्रणाशससारविमोचनादय ।
भवन्ति लीलाविधयश्च वैदिका॰ त्वदीयगम्भीरमनोनुसारिणः ॥
(स्तोत्ररत्नम्)

परिजनपरिबर्हा भूषणान्यायुधानि
प्रवरगुणगणाश्च ज्ञानशक्त्यादयस्ते ।
परमपदमथाण्डान्यात्मदेहस्तथात्मा
वरद सकलमेतत्संश्रितार्थं चकर्थ ॥ इति ॥ (वरदराजस्तव)

अयं पुनः भृत्यस्याभिप्राय —

उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ
स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी ।
उपायोपेयत्वे तदिह तव तत्वं न तु गुणौ
अतस्त्वा श्रीरङ्गेशय शरणमव्याजमभजम् ॥ (श्रीरङ्गराजस्तव)

स्वतन्त्रस्वामित्वात् स्वबहुमतिपात्रेषु नियत
श्रिय कान्तो देव. स खलु विनियुङ्क्ते चिदचितौ ।
यथालोकाम्नाय यतिपतिमुखैराहितधिया
ततो न. कैङ्कर्यं तदभिमतपर्यन्तमभवत्॥ (पुरुषार्थकाष्ठाधिकार )

अत्रोभयोरभिप्रायावुभावपि विदित्वा निरतिशयमानन्दमनुभवत इति रसिकजनहृदयङ्गममेवैतत् ॥

## अथ वात्सल्यरस

वात्सल्य नाम दोषतिरस्कारेणी बुद्धि । सैषा पितृपुत्रभावेन मातृपुत्रभावेन च निरूपणीया । अत्र "असख्याता कुमारका" "माता पिता भ्राता निवासश्शरण सुहृत् गतिर्नारायण" इति सुबालोपनिषद्वचन ' पितेवपुत्रस्य" "नि च देवीं मातर श्रिय वासय मे कुले" इत्यादीनि वचनानि प्रमाणभूतानि ॥

वात्स्यायनभाष्ये—"आसकल्पश्चालम् । यथा पिताऽपत्यनां तथा पितृभूताना ईश्वरो भूतानाम्" इति ॥ (४–१–२१)

पितरि स्वामिनि सार्वभौमे सति यौवराज्याभिषेकलाभवत् मुक्तस्यानन्दलाभ । अत्र "जक्षत् क्रीडन् रममाण स्त्रीभिर्वा यानैर्वा, स यदि पितृलोककामो भवति" इत्यादिना निरूप्यमाण मुक्तानन्दः कुमारानन्द इव पितु मातुश्च आनन्दावह एव सन् कैकर्यव्यपदेश्यो भवतीति सिद्धान्त' ॥

पितृपुत्रभावलक्षणेऽस्मिन्नेवोदाहरणे औचित्यमाचार्याणामभिमतमिति तस्यैव सर्वत्र निर्देशादवधारयामः ॥

अत्रैव शबरकुलसवर्धितराजकुमारदृष्टान्त । इम हि दृष्टान्त भ्रान्तिनिवृत्तिपूर्वकसच्चिदान्दैकलक्षणमोक्षनिर्देशाय बृहदारण्यकभाष्ये-श्रीशङ्कराचार्यौ (४–१–२०) समुदाहृत पश्याम ॥

भास्करभाष्ये तु—कश्चित्काल म्लेच्छाचारानुवर्तनेन तत्त्वज्ञानार्थं मिथ्याविषयकोपदेशोदाहरणाय निर्दिष्टः ॥

श्रीभाष्ये तु समन्वयाधिकरणे—स्वरूपपरवाक्यस्यापि प्रयोजनवत्त्वनिदर्शनाय कुशलवसमाधिमभिप्रेत्य परिवर्तितः ॥

तात्पर्यचन्द्रिकायां पुनराचार्यैरेवमभिहितम् (१२–११) "यथा बाल्ये बालक्रीडाप्रसङ्गेन नरेन्द्रभवनान्निष्क्रान्तस्य मार्गाद्भ्रष्टस्य व्याधगृहीतस्य पक्कणे वर्तमानस्य राजकुमारस्याप्तोपदेशात् स्वात्मनस्तथात्वं मत्वा विमृशत स्वात्मनि राजसाम्य अङ्गप्रत्यङ्गादिषु पश्यत. तस्मिन् यथा निरतिशया प्रीति पितृत्वविषया जायते एवमस्माकमपि यथोपदेश भगवच्छेषभूते स्वात्मनि तत्साम्याकारेण साक्षात्कृते भक्त्यर्थं न किञ्चित्कर्तव्यमस्तीत्यभिप्रायेण मयि पराभक्ति स्वयमेवोत्पद्यते इत्युक्तम् ॥ इति

एवमद्भुतादिरसानुभवस्तु सर्वत्र सुलभ इति दिक्प्रदर्शनार्थमेवायमुपक्रम इति अवधेयम् । एव च प्रतिपाद्याना पुरुषाणां प्रकृतिवैचित्र्यात् उपदेशानामपि वैचित्र्यमिति तन्निबन्धना बहुविधा' सबन्धवर्णना इति सारार्थ ॥

एव लोकानुरोधेनैव बुद्धावाधीयमानो रसः निरतिशयत्वविशेषितः परिपूर्णानवरतानित्यानन्यप्रयोजनविशदतमदशामापन्न' मोक्षानन्द इति सारार्थः ॥

### अस्यचार्थस्योपबृंहणम्.

एवविधाभिप्रायेणैव हि सर्वोपनिषदुपबृंहणभूतेषु पुराणेष्वेव पठ्यते—(श्रीभाग ७–१–३२) नारद'—

कामाद्द्वेषाद्भयात्स्नेहात् यथा भक्त्येश्वरे मन. ।
आवेश्य तदघ हित्वा बहवस्तद्गतिं गताः ॥ इति ।

अत्र–अनुग्रहाय भूतानामितिश्लोके "याश्श्रुत्वा तत्परोभवेत्" इति वाक्येन ध्याननियोगवादिसिद्धान्तन्यायेन ज्ञानमात्रे तात्पर्यनिर्णयात् विषयपारमार्थ्ये तात्पर्यासिद्धेश्च तत्परत्वसपादनानुकूलव्यापारलक्षण पुराण-हृदय विदुषामतिरोहितम् ॥

"नासूयन् खलु कृष्णाय" इतिश्लोकार्थं सावधानेन परामृश-तामेव विकल्प समुदेति–कीदृशयि माया ? अस्यां मायाया श्रीकृष्णेन सह क्रीडाया सङ्गता गोपवध्व किं मायामय्य आहोस्वित् पारमार्थिक्य ? रासक्रीडावृत्तान्त केवलमैन्द्रजालिको वा परमार्थो वा ? पारमार्थ्ये कोऽसौ श्लोकार्थ । ऐन्द्रजालिकत्वे कोऽयमत्राक्षेप ? को वा समाधि । तस्माद्-विचारितरमणीयेय कथा पामराणामपि भगवति प्रीतिसञ्जननोऽर्थवाद इति तत्त्वम् ॥

विष्णुपुराणे(५-१३)ऽप्येवमवधेयम्—

स तथा सह गोपीभि ररास मधुसूदन ।
यथाब्दकोटिप्रतिम क्षणस्तेन विनाऽभवत् ॥ ५८ ॥
ता वार्यमाणा पतिभि पितृभि॰ भ्रातृभिस्तथा ।
कृष्ण गोपाङ्गना रात्रौ रमयन्ति रतिप्रिया॰ ॥ ५९ ॥
सोपि कैशोरकवया॰ मानयन् मधुसूदन॰ ।
रेमे ताभिरमेयात्मा क्षपासु क्षपिताहित॰ ॥ ६० ॥
तद्भर्तृषु तथा तासु सर्वभूतेषु चेश्वर ।
आत्मस्वरूपरूपोऽसौ व्यापी वायुरिव स्थितः ॥ ६१ ॥
यथा समस्तभूतेषु नभोऽग्नि पृथिवी जलम् ।
वायुश्चात्मा तथैवासौ व्याप्य सर्वमवस्थित ॥ ६२ ॥

अत्र विष्णुचित्तव्याख्या– अथ कृष्णस्य सर्वव्यापनादीश्वरत्वेन अपहतपाप्मत्वात् गोपीसम्भोगेऽपि जीववन्न लेप इत्याह–तद्भर्तृष्वितिद्वयेन।

आत्मस्वरूपरूपः जीवस्वरूपशरीर । अत्र पूर्वश्लोकेनास्य सर्वचेतन-शरीरतत्वमुक्तम् । उत्तरेणसर्वाचेतनशरीरकत्वम् ॥ ६१–६७॥ इति ॥

अत्रैव श्रीधरीयव्याख्या—ननु धर्मस्थापनायावतीर्णो भगवान् कथ गोपाङ्गना पापे प्रवर्तयन् स्वयमपि पाप चकारेत्यत्राह—तद्भर्तृष्विति । न तावद्गोपीना पापमस्ति । स्वभक्ताहितक्षपणस्य तस्य तद्दोषक्षपणेति-समर्थत्वात् । न च तस्य दोष—तद्भर्त्रादिसर्वव्यापिपरमात्मरूपत्वात् । सर्वव्यापित्वमेव दृष्टान्तेनाह—यथेति । अत्रापिप्रागुक्तमेव तत्त्वम् ॥

पुराणेष्वप्यर्थवाद पूर्वाचार्यैरङ्गीकृत । यथा—महाभारते आदि-पर्वणि श्वेतकेतूपाख्याने एव श्रूयते—

अनावृता हि विप्राणा सर्वेषामङ्गना भुवि ।
यथा गाव स्थितास्तात स्वेस्वे वर्णे तथा प्रजा ॥
व्युच्चरन्त्या पतिं नार्या अद्यप्रभृति पातकम् ।
भ्रूणहत्याकृत पाप भविष्यत्यसुखावहम् ॥

इति। अत्र हि पाण्डुमहाराज कुन्तीं प्रति श्वेतकेतूपाख्यानमाचचक्षे—तत्साराशस्तु निर्धनेन उत्सवार्थ क्रियमाणायामाभरणप्रार्थनायामिव अपत्नीकेन ब्राह्मणेन अपत्यार्थ क्रियमाणाया मुद्गलकपत्नीप्रार्थनाया

मातर ता तथा दृष्ट्वा नीयमाना बलादिव ।
तपसा दीप्तवीर्यो हि श्वेतकेतु॰ न चक्षमे ॥
सगृह्य मातर हस्ते श्वेतकेतुरभाषत ।
दुर्ब्राह्मण विमुञ्चत्व मातर मे पतिव्रताम् ॥

इत्यादिना श्वेतकेतुर्निरोधयामासेत्युच्यते ॥

"इदमुपाख्यान कुन्तीमपत्यार्थ पुरुषान्तरे प्रवर्तयितुकामस्य पाण्डो॰ स्वकपोलकल्पितार्थविषय प्ररोचनामात्रम्" इति भावप्रकाशि-कायां श्रीरङ्गरामानुजमुनिवर्य कथयति ॥ इति ॥

तन्त्रवार्तिके कुमारिलभट्टाचार्यवाक्य श्रोतव्यम् । यथा—(१-२ ७)

कामाद्गोप्यो भयात्कस द्वेषाच्चैद्यादयोनृपा ।
सम्बन्धात् वृष्णयो यूय स्नेहाद्भक्त्या वय प्रभो ॥
यया कया च विधया सम्बन्धस्सतु पावन ॥

इत्यादि । भगवानपि स्वयमेवाह—

बहूना जन्मनामन्ते ज्ञानवान्मा प्रपद्यते ।
वासुदेवम्सर्वमिति स महात्मा सुदुर्लभ ॥

इति । यथोपदेशमर्जुनोऽपि साक्षात्कृतवान्—

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव ।
त्वमेव विद्या द्रविण त्वमेव त्वमेव सर्वं मम देवदेव ॥

इति । पूर्वाचार्या अप्येवमेवानुसहितवन्त --

पिता त्व माता त्व दयिततनयस्त्व प्रियसुहृत्
त्वमेव त्व मित्र गुरुरसि गतिश्चासि जगताम् ।
त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहम्
प्रपन्नश्चैवसत्यहमपि तवैवास्मि हि भर ॥ इति ॥

एव चैतादृश्या भगवति प्रीते सर्वेषामप्यधिकारिणां बुद्ध्या-रोहाय लौकिकविषयानुभवमवलम्ब्य भगवतो विहारकथावर्णनासु रास-क्रीडादिगोचरासु विविधा वादा पुराणेषु कृता । तावताप्यनुपरम्य आक्षेपसमाधानानि च वर्णितानि ॥ (यथा श्रीभागवते--१०-३३)

राजा—

सस्थापनाय धर्मस्य प्रशमायेतरस्य च ।
अवतीर्णो हि भगवानशेन जगदीश्वर ॥
स कथं धर्मसेतूना वक्ता कर्ताऽभिरक्षिता ।
प्रतीपमाचरत् ब्रह्मन् परदाराभिमर्शनम् ॥

आप्तकामो यदुपति कृतवान् वै जुगुप्सितम् ।
किमभिप्राय एतन्मे सशय भिन्धि सुव्रत ॥

श्रीशुक —

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ।
तेजीयसा न दोषाय वह्नेस्सर्वभुजो यथा ॥
नैतत्समाचरेज्जातु मनसापि ह्यनीश्वरः ।
विनश्यत्याचरन् मौर्ख्यात् यथा रुद्रोऽब्धिजं विषम् ॥
ईश्वराणा वचस्सत्य तथैवाचरित क्वचित् ।
तेषां यत्स्ववचोयुक्त बुद्धिमाम्तत्तदाचरेत् ॥
कुशलाचरितेनैषामिह चार्थो न विद्यते ।
विपर्ययेण चानर्थो निरहकारिण. प्रभो ॥
किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम् ।
ईशितुश्चेशितव्याना कुशलाकुशलान्वय ॥
गोपीना तत्पतीनां च सर्वेषा चापि देहिनाम् ।
योन्तश्चरति सोध्यक्ष' एष क्रीडनदेहभाक् ॥
अनुग्रहाय भूताना मानुष देहमाश्रित ।
भजते तादृशी क्रीडा' याश्श्रुत्वा तत्परो भवेत् ॥
नासूयन् खलु कृष्णाय मोहितास्तस्य मायया ।
मन्यमानास्स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकस ॥३९॥

"एव भारतादिवाक्यानि व्याख्येयानि । तत्रापि दानराजमोक्षधर्मादिषु केचित्साक्षाद्विधय । केचित्पुन. परकृतिपुराकल्परूपेणार्थवादा । सर्वोपाख्यानेषु तात्पर्ये सति श्रावयेदिति विधेरानर्थक्यात् । कथञ्चिद्गम्यमानस्तुतिनिन्दापरिग्रहः । तत्परत्वाच्च नातीवोपाख्यानेषु तत्त्वाभिनिवेशः कार्यः । वेदप्रस्थानाभ्यासेन हि वाल्मीकि-

द्वैपायनप्रभृतिभि तथैव स्ववाक्यानि प्रणीतानि । प्रतिपाद्याना च विचित्रबुद्धित्वात् युक्तमेवैतत्" । इति ॥

तथा—अपूर्वाधिकरणे आत्मनो विभुत्वसमर्थनावसरे "अङ्गुष्ठमात्र पुरुष निश्चकर्ष यमो बलात् इति वचन काव्यशोभानिबन्धनम्" इत्यप्युक्तम् ॥

अत्र शतदूषण्यां श्रीवेदान्ताचार्यवाक्य श्रूयताम्—(६६ वादे) 'परिहृत चैतदकर्मवश्यतया भगवत्पराशरादिभि' । कामाद्गोप्य इति भगवत्यनुरागानुवृत्ति अपवर्गायैव जायत इत्युक्तम् ॥

ननु धर्मसस्थापनार्थाय सभवत. तत्सक्षोभण चेति कथमिदमुच्यते । न—उक्तोत्तरत्वात् । नन्दगोपनन्दनत्वाभिनयमभिनयतस्तस्य न तावत्तदानीं वर्णाश्रमाचारनुवृत्तिनियम । आभीरकन्यका अपि भगवन्तमेव भर्तारमभ्यर्थ्य जन्मान्तरचरितव्रताः दिव्यप्रकृतय एवेति तास्वप्सरस्समाधिरनुसधेय. । तत्तदभिमतफलप्रदान च ईश्वरस्यादोषायेति ॥

यदा तु भगवान्वसुदेवतनयतया प्रतिबोधमभिनयन् यदुवशोचित क्षत्रधर्ममनुप्राविशत् तदा सावधान एव सर्वदा सर्वान् धर्मानन्वपालयत् । तथा हि सर्वत्र कथ्यते—

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्य वर्त एव च कर्मणि ॥ तथा—
कृतोदक कृतजप. हुताग्निस्समलकृत ।
तत उद्यन्तमादित्यमुपातिष्ठत माधव. ॥ इति ।

तथा—अश्वत्थामास्त्रपावकविप्लुष्टविराटतनयागर्भसजीवनावसरे—साधिकषोडशसहस्रस्त्रीरसिको बृन्दावनविहारी वल्लवीबृन्दनिर्विष्ट यौवनारम्भः भगवान् स्वयमेवाह—

यदि मे ब्रह्मचर्यं स्यात्सत्य च मयि तिष्ठति ।

अव्याहत ममैश्वर्य तेन जीवतु बालक ' ॥

इति दृश्यते । एतेन दशाभेदेन विरोध परिहृत ॥

वस्तुतस्तु—देशभेदेन कालभेदेन च विरोध परिहर्तुं शक्यते । यथा–(तन्त्रवार्तिके–१३६ पु) "अत एव वासुदेवेन कर्ण उक्त — षष्ठे च त्वामहनि द्रौपदी पर्युपस्थास्यति" इति । तथा–(१३८)—

सर्वेषामेवमादीना प्रतिदेश व्यवस्थया ।
आपस्तम्बेन सहृत्य दुष्टादुष्टत्वमाश्रितम् ॥
येषां परपराप्राप्ता· पूर्वजैरप्यनुष्ठिता ।
त एव तैर्न दुष्ष्येयु आचारै नेतरे पुन ॥

इति लिखितमस्ति ॥

एतेन विज्ञायते देशभेदेन कालभेदेन च आचारा विविधा· विचित्राः विपर्यस्यन्तीति । एव च साति विभिन्नतत्तद्देशकालवर्तिभि पुरुषै स्वस्ववासनानुसारेणाक्षेपास्समाधानानि च वर्ण्यन्ते । न खल्विदं विचित्रं कालदेशदशाचिन्ताचतुराणामिति सर्वं चतुरश्रम् ॥

यथावेद यथालोक मोक्षतत्त्व निरूपितम् ।
लक्ष्मीपुर श्रीनिवासविपश्चिच्चक्रवर्तिना ॥

वासुदेव प्रीयताम्

— ——